## सप्तमः सर्गः

लिङ्गं ततस्तास्तु विधिप्रदिष्टम् गात्रेण बिभ्रन्न तु चेतसा तत् ।
भार्य्यागतैरेव मनोवितर्कैः यो ह्रीयमानो न ननन्द नन्दः ॥१॥

स पुष्पमासस्य च पुष्पलक्ष्म्या सर्व्वाभिसारेण च पुष्पकेतोः ।
यानीयभावेन च यौवनस्य विहारसंस्थो न शमं जगाम ॥२॥

स्थितः स दीनः सहकारवीथ्यामालीनसंमूर्च्छितषट्पदायाम् ।
भृशं जजृम्भे युगदीर्घबाहुः ध्यात्वा प्रियां चापमिवाचकर्ष ॥३॥

स पातकचोदमिव प्रतीच्छ[न्] चूतद्रुमेभ्यस्तनुपुष्पवर्षम् ।
दीर्घं निशश्वास विचिन्त्य भार्य्यां नवग्रहो नाग इवावबुद्धः[१] ॥४॥

शोकस्य हर्त्ता शरणागतानाम् शोकस्य कर्त्ता प्रतिगर्व्वितानाम् ।
अशोकमालम्ब्य स जातशोकः प्रियां प्रियाशोकवनां शुशोच ॥५॥

प्रियां प्रियायाः प्रतनुं प्रियङ्गुं[२] निशाम्य भीतामिव निष्पतन्तीम् ।
सस्मार तामश्रुमुखीं सबाष्पः प्रियां प्रियङ्गुप्रसवावदाताम्[३] ॥६॥

पुष्पावनद्धे तिलकद्रुमस्य दृष्ट्वान्यपुष्टां शिखरे निविष्टाम् ।
सङ्कल्पयामास शिखां प्रियायाः शुक्लांशुकाट्टालमपाश्रितायाः ॥७॥

लतां प्रफुल्लामतिमुक्तकस्य चूतस्य पार्श्वे परिरभ्य जाताम् ।
निशाम्य चिन्तामगमत् तदैवं स्लिष्टा भवेत् मामपि सुन्दरीति ॥८॥

पुष्पै[र्]राला[४] अपि नागवृक्षा दान्तैः समुद्गैरिव[५] हेममगर्भैः ।
कान्तारवृक्षा इव दुःखितस्य न चक्षुराचिक्षिपुरस्य तत्र ॥९॥

---

१ P. M. इव नागावबुद्धः T. २ P. M. प्रियं भूः T.
३ P. M. प्रियां प्रियं सप्रसवावदाता T. ४ P. M. पुष्पोकुभरगा ।
५ P. M. दान्तैः समुक्कैः P. L. M. lacuna.

गन्धं वमन्तोपि च गन्धपूर्णा गन्धर्व्वदेश्या इव गन्धपूर्णाः ।
तस्यान्यचित्तस्य शुगात्मकस्य[1] घ्राणं न जह्रु[2]र्हृदयं प्रतेपुः ॥१०॥
संरक्तकण्ठैरपि [3]नीलकण्ठैः तुष्टैः प्रहृष्टैरपि चान्यपुष्टैः ।
लेलिह्यमानैश्च मधु द्विरेफैः स्वनद्वनं तस्य मनो नुनोद[4] ॥११॥
स तत्र भार्य्यारणिसम्भवेन वितर्कधूमेन तमःशिखेन ।
कामाग्निनान्तर्हृदिदह्यमानो[5] विहाय धैर्य्यं विललाप तत्तत् ॥१२॥

अद्यावगच्छामि सुदुष्करं ते चक्रुः करिष्यन्ति च कुर्व्वते च ।
त्यक्त्वा प्रियामश्रुमुखीं तपो[6] ये चेरुश्चरिष्यन्ति चरन्ति चैव ॥१३॥
तावद्दृढं बन्धनमस्ति लोके न दारवं तान्तव[7]मायसं वा ।
यावद्दृढं बन्धनमेतदेव मुखं चलाक्षम् ललितञ्च वाक्यम् ॥१४॥
छित्त्वा च भित्त्वा च हि यान्ति तानि स्वपौरुषाच्चैव सुहृद्बलाच्च ।
ज्ञानाच्च रौच्याच्च विना विमोक्तुं न शक्यते स्नेहमयस्तु पाशः ॥१५॥
ज्ञानं न मे तच्च शमाय यत् स्यात् न चास्ति रौचं करुणात्मकोस्मि ।
कामात्मकश्चास्मि गुरुश्च बुद्धः स्थितोऽन्तरे चक्रगतेरिवास्मि ॥१६॥
अहं गृहीत्वापि हि भिक्षुलिङ्गं भ्रातृर्षिणा द्विगुरुणानुशिष्टः ।
सर्व्वास्ववस्थासु लभे न शान्तिं प्रियावियोगादिव चक्रवाकः ॥१७॥
अद्यापि तन्मे हृदि वर्त्तते च यद्दर्पणे व्याकुलिते मया सा ।
कृतानृतक्रोधकमब्रवीन्मां कथं कृतोसी[8]ति शठं हसन्ती ॥१८॥

---

१ P. M. सुखात्मकस्य । २ P. M. जघ्नुः । ३ P. L. M. संरक्तकण्ठैश्च विनील० । ४ P. M. ननानुमोद P. L. M. has only the lower halves of the five letters remaining.
५ P. M. तद्वविदह्यमानो । ६ P. M. तथा ये ।
७ P. M. वास्मरं । ८ P. M. हृतोसीति ।

यथैष्यनाश्वानविशेषकायां मयीति यन्मामवदच्च साश्रु ।
पारिप्लवाक्षेण मुखेन बाला तन्मे वचोऽद्यापि मनो रुणद्धि ॥१८॥
बद्धासनं पादपनिर्झरस्थः स्वस्थो यथा ध्यायति भिक्षुरेषः ।
शक्तः क्वचिन्नाहमिवैष नूनम् शान्तस्तथा तृप्त इवोपविष्टः ॥२०॥
पुंस्कोकिलानामविचिन्त्य घोषं वसन्तलक्ष्म्यामविचार्य्य चक्षुः ।
शास्त्रं यथाभ्यस्यति चैष युक्तः शङ्के प्रियाकर्षति नास्य चेतः ॥२१॥
अस्मै नमोस्तु स्थिरनिश्चयाय निवृत्तकौतूहलविस्मयाय ।
शान्तात्मनेऽन्तर्गतमानसाय चङ्क्रम्यमानाय[१] निरुत्सुकाय ॥२२॥
निरीक्षमाणस्य जलं सपद्मम् वनञ्च पुण्यम् परपुष्टजुष्टम् ।
कस्यास्ति वीर्य्यं नवयौवनस्य मासे मधौ धर्म्मसपत्नभूते ॥२३॥
भावेन गर्व्वेण गतेन लक्ष्म्या स्मितेन कोपेन मदेन वाग्भिः ।
जह्रुः स्त्रियो देवनृपर्षिसंघान् कस्माद्धि नास्मद्विधमाक्षिपेयुः ॥२४॥
कामाभिभूतो हि हिरण्यरेताः स्वाहां सिषेवे मघवानहल्यां ।
सत्वेन सर्गेण च तेन हीनः स्त्रीनिर्जितः किं बत मानुषोऽहम् ॥२५॥
सूर्य्यः स रम्भां प्रति जातरागस्तत्प्रीतये नष्ट इति श्रुतं नः ।
यामश्वभूतोऽश्ववधूं समेत्य र(य)तोऽश्विनौ तौ जनयाम्बभूव ॥२६॥
स्त्रीकारणं वैरविषक्तबुद्ध्योर्वैवस्वताग्न्योश्चलितात्मधृत्योः ।
बह्वनि वर्षाणि बभूव युद्धं कः स्त्रीनिमित्तं न चलेदिहान्यः ॥२७॥
भेजे श्वपाकीं मुनिरक्षमालां कामाद् वशिष्ठश्च स सद्वरिष्ठः ।
यस्यां विवस्वानिव भूजलादः सुतः प्रसूतोऽस्य कपिञ्जलादः ॥२८॥
पराशरः शापशरस्तथर्षिः काली[ ] सिषेवे झषगर्भयोनिं ।

---

१ Both P. M. and P. L. M. यं क्रम्यमानाय T.

अतोऽस्य यस्यां सुषुवे[1] महात्मा द्वैपायनो वेदविभागकर्त्ता ॥२९॥
द्वैपायनो धर्म्मपरायणश्च रेमे समं काशिषु वेशवध्वा[2] ।
यया हृतोऽभूत् चलनूपुरेण पादेन विद्युल्लतयेव मेघः ॥३०॥
तथाङ्गिरा रागपरीतचेताः सरस्वतीं[ं] ब्रह्मसुतः सिषेवे ।
सारस्वतो यत्र सुतोऽस्य जज्ञे नष्टस्य वेदस्य पुनःप्रवक्ता ॥३१॥
तथा नृपर्षेर्दिलिपस्य य(जं)ज्ञे स्वर्गस्त्रियां काश्यप आगतास्थः ।
स्रुचं गृहीत्वा स्ववदात्मतेजः चिक्षेप वह्नाव[3]वसितो यतोऽभूत् ॥३२॥
तथाङ्गदोऽन्त[ं]तपसोऽपि गत्वा कामाभिभूतो यमुनामगच्छत् ।
धीमत्तरं यत्र रथीतरं स सारङ्गजुष्टं जनयाम्बभूव ॥३३॥
निशाम्य शान्तां नरदेवकन्यां वनेऽपि शान्तेऽपि च वर्त्तमानः ।
चचाल धैर्य्यात् मुनिर्ऋष्यशृङ्गः[4] शैलो महीकम्प इवोच्चशृङ्गः ॥३४॥
ब्रह्मर्षिभावार्थमपास्य राज्यं भेजे वनं यो विषयेष्वनास्थः ।
स गाधिजश्चापहृतो घृताच्या समा दशैकं[5] दिवसं विवेद ॥३५॥
तथैव कन्दर्पशराभिमृष्टो रम्भां प्रति स्थूलशिरा मुमूर्च्छ ।
यः कामरोषात्मतयानपेक्ष[ः] शशाप तामप्रतिगृह्यमाणः ॥३६॥
प्रमत्वरायां च रुरुः प्रियायां भुजङ्गमेनापहृतेन्द्रियायां ।
संदृश्य संदृश्य जघान सर्व्वेन्द्रियं[6] न रोषेण तपो ररक्ष[7] ॥३७॥

---

१ P. M. यंस्यासुषुवे । २ P. L. M. lacuna P. M. वेश्मवर्या । ३ P. M. वह्निं T. ४ P. M. धैर्य्यन्मुनि ऋष्यिशृङ्गः P. L. M. धैर्य्यान्मुनि ऋष्यशृङ्गः । ५ P. M. दशीकं T.

६ सर्व्वान्द्रियं (both P. L. M. and P. M.) T

७ P. M. तथोररक्षं ।

नष्टा शशाङ्कस्य यशोगुणाङ्को बुधस्य सूनुर्विबुधप्रभावः ।
तथोर्व्वशीमप्सरसं विचिन्त्य राजर्षिरुन्मादमगच्छदैडः ॥२८॥

रक्तो गिरेर्मूर्द्धनि मेनकायां कामात्मकत्वाच्च स तालजङ्घः ।
पादेन विश्वावसुना सरोषम् वज्रेण हिंताल इवाभिजघ्ने ॥२९॥

नाशङ्गतायां परमाङ्गनायां गङ्गाजलेऽनङ्गपरीतचेताः ।
जह्नुश्च गङ्गां नृपतिर्भुजाभ्याम् रुरोध मैनाक[१] इवाचलेन्द्रः ॥४०॥

भूपश्च गङ्गाविरहात् जुघूर्ण गङ्गाम्भसा शाल इवात्तमूलः ।
कुलप्रदीपः प्रतिपस्य सूनु[:] श्रीमत्तनु[:] शान्तनुरस्वतन्त्रः ॥४१॥

हृताञ्च सौनन्दकिनानुशोचन् प्राप्तामिवोर्व्वीं स्त्रियमुर्व्वशीं तां ।
सद्वृत्तवर्म्मा किल सोमवर्म्मा बभ्राम चित्तोद्भवभिन्नधर्म्मा ॥४२॥

भार्य्यां मृतां चानुममार राजा भीमप्रभावो भुवि भौमकः सः ।
बलेन सेनाक इति प्रकाशः सेनापतिर्द्देव इवात्तसेनः ॥४३॥

स्वर्गं गते भर्त्तरि शान्तनौ च कालीं जिहीर्षन् जनमेजयः सः ।
अवाप भीष्मात् समवेत्य मृत्युं न तद्गतं मन्मथमुत्ससर्ज ॥४४॥

शप्तश्च पाण्डुर्मदनेन नूनम् स्त्रीसङ्गमे मृत्युमवाप्स्यसीति ।
जगाम माद्रीं न महर्षिशापात् असेव्यमेतत् विममर्ष मृत्युम् ॥४५॥

एवंविधा देवनृपर्षिसङ्घा स्त्रीणां वशं कामवशेन जग्मुः ।
धिया च सारेण च दुर्व्बलः स प्रियामपश्यन् किमु विक्लवोऽहम् ॥४६॥

यास्यामि तस्मात् गृहमेव भूयः कामं करिष्ये विधिवत्सकामम् ।
नह्यन्यचित्तस्य चलेन्द्रियस्य लिङ्गं क्षमं धर्म्मपथाच्च्युतस्य ॥४७॥

---

१ P. M. मनामक ।

पाणौ कपालमवधाय विधाय मौण्ड्यम्

मानं निधाय विकृतं परिधाय वासः ।

यस्योद्भवो न धृतिरस्ति न शान्तिरस्ति

चित्रप्रदीप इव सोऽस्ति च नास्ति चैव ॥४८॥

यो निःसृतश्च न च निःसृतकामरागः

काषायमुद्वहति यो न च निष्कषायः ।

पात्रं बिभर्त्ति च गुणैर्न च पात्रभूतो

लिङ्गं वहन्नपि स नैव गृही न भिक्षुः ॥४९॥

न न्याय्यमन्वयवतः परिगृह्य लिङ्गम्

भूयो विमोक्तुमिति योऽपि हि मे विचारः ।

सोऽपि प्रणश्यति विचिन्त्य नृपप्रवीरां

स्तान् ये तपोवनमपास्य गृहाण्यतीयुः ॥५०॥

शाल्वाधिपो हि ससुतोपि तथाम्बरीषो

रामोन्ध एव स च साङ्कृतिरन्तिदेवः ।

चीराण्यपास्य दधिरे पुनरंशुकानि

छित्त्वा जटाश्च कुटिला मुकुटानि बभ्रुः ॥५१॥

तस्माद् भिक्षार्थं मम गुरुरितो यावदेव प्रयातः

त्यक्त्वा काषायं गृहमहमितस्तावदेव प्रयास्ये ।

पूज्यं लिङ्गं हि स्खलितमनसो बिभ्रतः क्लिष्टबुद्धेः

नामुत्रार्थः स्यात् उपहतमतेर्नाप्ययं जीवलोकः ॥५२॥

इति सौन्दरनन्दे महाकाव्ये नन्दविलापो नाम सप्तमः सर्गः ॥

---

## अष्टमः सर्गः

अथ नन्दमधीरलोचनम् गृहयानोत्सुकमुत्सुकोत्सुकम् ।
अभिगम्य शिवेन चक्षुषा श्रमणः कश्चिदुवाच मैत्रया[१] ॥१॥
किमिदं मुखमश्रुदुर्दिनम् हृदयस्थं विवृणोति ते भ्रमः ।
धृतिमेहि नियच्छ विक्रियां न हि बाष्पश्च शमश्च शोभते ॥२॥
द्विविधा समुदेति वेदना नियतं चेतसि देह एव च ।
श्रुतविध्युपचा[र]कोविदा द्विविधा एव तयोश्चिकित्सकाः ॥३॥
तदियं यदि कायिकी रुजा भिषजे तूर्णमसौ समुच्यताम्[२] ।
विनिगुह्य हि रोगमातुरो नचिरात्तीव्रमनर्थमृच्छति ॥४॥
अथ दुःखमिदं मनोमयं वद वक्ष्यामि यदत्र भेषजम् ।
मनसो हि रजस्तमःसतां[३] भिषजोऽध्यात्मविदः परीक्षकाः ॥५॥
निखिलेन च सत्यमुच्यताम् यदि वाच्यं मयि सौम्य मन्यसे ।
गतयो विविधा हि चेतसाम् बहु[गु]ह्यानि मदाकुलानि च ॥६॥

इति तेन स बोधितस्तदा व्यवसायं प्रविवक्षुरात्मनः ।
अवलम्ब्य करेण करेण तं प्रविवेशान्यतरत्[४] वनान्तरम् ॥७॥
अथ तत्र शुचौ लतागृहे कुसुमोद्गारिणि तौ निषेदतुः ।
मृदुभिर्मृदुमारुतेरितैः उपगूढावि[व] बालपल्लवैः ॥८॥
स जगाद ततश्चिकीर्षितम् घननिश्वासगृहीतमन्तरा ।
श्रुतवाग्विभवाय[५] भिक्षवे विदुषा प्रव्रजितेन दुर्वचम् ॥९॥

---

१ P. M. मैत्रयः ।   २ P. M. मभूनमुच्यतां T.
३ P. M. ०सत्त्व T.   ४ P. M. प्रविश्यष्टान्यतराद् T.
५ P. M. वाग्भिसदाय T.

सदृशं यदि धर्म्मचारिणः सततं प्राणिषु मैत्रचेतसः ।
अधृतौ यदियं हितैषिता मयि ते स्यात् करुणात्मनः सतः ॥१०॥
अत एव च मे विशेषतः प्रविवक्षा क्षयवादिनि त्वयि ।
न हि भावमिमं चलात्मने कथयेयं ब्रुवतेऽप्यसाधवे ॥११॥
तदिदं शृणु मे समासतो न रमे धर्म्मविधावृते प्रियां ।
गिरिसानुषु कामिनीमृते कृतरेता इव किन्नरश्चरन् ॥१२॥
वनवाससुखात् पराङ्मुखः प्रयियासा गृहमेव येन मे ।
न हि शर्म्म लभे तया विना नृपतिर्हीन इवोत्तमश्रिया ॥१३॥
अथ तस्य निशम्य तद्वचः प्रियभार्य्याभिमुखस्य शोचतः ।
श्रमणः स शिरः प्रकम्पयन् निजगादात्मगतं शनैरिदम् ॥१४॥
कृपणं बत यूथलालसो महतो व्याधभयाद्विनिःसृतः ।
प्रविविक्षति वागुरां मृगश्चपलो गीतरवेण वञ्चितः ॥१५॥
विहगः खलु जालसंवृतो हितकामेन जनेन मोक्षितः ।
विचरन् फलपुष्पवद् वनम् प्रविविक्षुः स्वयमेव पञ्जरम् ॥१६॥
कलभः करिणा खलूद्धृतो बहुपङ्कात् विषमात् नदीतलात् ।
जलतर्षवशेन तां पुनः सरितं ग्राहवतीं तितीर्षति ॥१७॥
शरणे सभुजङ्गमे स्वपन् प्रतिबुद्धेन परेण बोधितः ।
तरुणः खलु जातविभ्रम[:] स्वयमुग्रं भुजगं जिघृक्षति ॥१८॥
महता खलु जातवेदसा ज्वलितादुत्पतितो वनद्रुमात् ।
पुनरिच्छति नीडतृष्णया पतितुं तत्र गतव्यथो द्विजः ॥१९॥
अवशः खलु काममूर्च्छया प्रियया श्येनभयाद् विनाकृतः ।
न धृतिं समुपैति न ह्रियं करुणं जीवति जीवजीवकः ॥२०॥

अकृतात्मतया तृषान्वितो घृणया चैव धिया च वर्जितः ।
अशनं खलु वान्तमात्मना कृपण[:] श्वा पुनरत्तुमिच्छति ॥२१॥

इति मन्मथशोककर्षितम् तमनुध्याय मुहुर्निरीक्ष्य च ।
श्रमणः स हिताभिकाङ्क्षया गुणवद् वाक्यमुवाच विप्रियम् ॥२२॥

अविचारयतः शुभाशुभम् विषयेष्वेव निविष्टचेतसः ।
उपपन्नमलब्धचक्षुषो न रतिः श्रेयसि चेत् भवेत्तव ॥२३॥

श्रवणे ग्रहणेऽथ धारणे परमार्थावगमे मनःशमे ।
अविषक्तमतेश्चलात्मनो न हि धर्मेऽभिरतिर्विधीयते ॥२४॥

विषयेषु तु दोषदर्शिनः परितुष्टस्य शुचेरमानिनः ।
शमकर्मसु युक्तचेतसः कृतबुद्धेर्न रतं न विद्यते[१] ॥२५॥

रमते तृषितो धनश्रिया रमते कामसुखेन बालिशः ।
रमते प्रशमेन सज्जनः परिभोगान् परिभूय विद्यया ॥२६॥

अपि च प्रथितस्य धीमतः कुलजस्यार्च्चितलिङ्गधारिणः ।
सदृशी न गृहाय चेतना प्रणतिर्वायुवशात् गिरेरिव ॥२७॥

स्पृहयेत् परसंश्रिताय यः परिभूयात्मवशां स्वतन्त्रतां ।
उपशान्तिपथे शिवे स्थितः स्पृहयेद्दोषवते गृहाय सः ॥२८॥

व्यसनाभिहतो यथा विशेत् परिमुक्तः पुनरेव बन्धनम् ।
समुपेत्य वनं तथा पुनः गृहसंज्ञं मृगयेत बन्धनम् ॥२९॥

पुरुषश्च विहाय यः कलिम् पुनरिच्छेत् कलिमेव सेवितुम् ।
स विहाय भजेत बालिशः कलिभूतामजितेन्द्रियः स्त्रियम् ॥३०॥

सविषा इव संश्रिता लताः परिमृष्टा इव सोरगा गुहाः ।

---

१ P. M. न रतिन्नविन्ते ।

विवृता इव चासवो धृता व्यसनान्ता हि भवन्ति योषितः ॥२१॥
प्रमदाः समदा मदप्रदाः प्रमदा वीतमदा भयप्रदाः ।
इति दोषभयावहाश्च ताः कथमर्हन्ति निषेवणं नु ताः ॥ २२ ॥
स्वजनः स्वजनेन भिद्यते सुहृदश्चापि सुहृज्जनेन यत् ।
परदोषविचक्षणाशयास्तदनार्य्याः प्रचरन्ति योषितः ॥२३॥
सुजनाः (कुराजा) कृपणीभवन्ति यत् यदयुक्तम् प्रचरन्ति साहसम् ।
प्रविशन्ति च यत्त्वमूमुखं रभसा तत्र[1] निमित्तमङ्गना ॥२४॥
वचनेन हरन्ति वर्णना[2] निशितेन प्रह[र]न्ति चेतसा ।
मधु तिष्ठति वाचि योषितां हृदये हालहलम्[3] महद् विषम् ॥२५॥
प्रदहन् दहनोऽपि गृह्यते विशरीरः पवनोऽपि गृह्यते ।
कुपितो भुजगोऽपि गृह्यते प्रमदानां तु मनो न गृह्यते ॥२६॥
न वपुर्विमृशन्ति न श्रि(पि)यम् न मतिं नापि कुलं न विक्रमम् ।
प्रहरन्त्यविशेषतः स्त्रियः सरितो ग्रा[ह]कुलाकुला इव ॥२७॥
न वचो मधुरं न लालनम्[4] स्मरति स्त्री न [च] सौहृदम् [कदा] ।
वलिता वनितेव चञ्चला तदितरा भुवने न विद्यते[5] ॥२८॥
अददत्सु भवन्ति नर्म्मदाः प्रददत्सु प्रविशन्ति विभ्रमम् ।
प्रणतेषु भवन्ति गर्व्विता प्रमदास्तृप्ततराश्च मानिषु ॥२९॥
गुणवत्सु चरन्ति भर्तृवत् गुणहीनेषु चरन्ति शत्रुवत्[6] ।

---

१ Both P. L. M. and P. M. स्तत्र ।
२ P. M. वचनेन न हन्ति वर्णना ।
३ P. M. हलाहलं T. ४ P. M. राडनं T.
५ P. M. तदिदरेष्ठि वनावद्यते P. L. M. lacuna T.
६ P. M. सूतवत् ।

धनवत्सु चरन्ति तृष्णया धनहीनेषु चरन्त्यवज्ञया ॥४०॥
विषयाद् विषयान्तरं गता प्रचरत्येव यथा हृतापि गौः ।
अनवेक्षितपूर्व्वसौहृदा रमतेऽन्यत्र गता तथाङ्गना ॥४१॥
प्रविशन्त्यपि हि स्त्रियः चितामनुबध्नन्त्यपि मुक्तजीविताः ।
अपि बिभ्रति नैव यन्त्रणा न तु भावेन वहन्ति सौहृदम् ॥४२॥
रमयन्ति पतीन् कथञ्चन प्रमदा याः पतिदेवताः क्वचित् ।
चलचित्ततया सहस्रशो रमयन्ते हृदयं स्वमेव ताः ॥४३॥
श्वपचं किल शक्रजित्सुता बकमीनरिपुं कुमुद्वती ।
मृगराजमथो बृहद्रथा प्रमदानामगतिर्न विद्यते ॥४४॥
कुरुहैहयवृष्णिवंशजा बहुमायाकवचोऽथ शंबरः ।
मुनिरुद्भ्रान्तमनाश्च गौतमः समवापुर्वनितोद्धतं रजः ॥४५॥
अकृतज्ञमनार्य्यमस्थिरम् वनितानामिदमीदृशं मनः ।
कथमर्हति तासु पण्डितो हृदयं सञ्जयितुं चलात्मसु ॥४६॥
अथ सूक्ष्ममतिः प्रियाशया लघुता सा हृदयं न पश्यसि ।
किमु कायमसद्गृहं स्रवत् वनितानाञ्चरितं न पश्यसि ॥४७॥
यदहन्यहनि प्रधावनैर्वसनैश्चाभरणैश्च संस्कृतम् ।
अशुभं तमसावृतेक्षण शुभतो गच्छसि नावगच्छसि ॥४८॥
अथवा समवैषि तत्तनुम् अशुभं त्वम् न तु संविदस्ति ते ।
सुरभिं विदधासि हि क्रियां अशुचेस्तत्प्रभवस्य शान्तये ॥४९॥
अनुलेपनमञ्जनं स्रजो मणिमुक्तातपनीयमंशुकम् ।
यदि साधु किमत्र योषितां सहजं तासु विचीयतां[1] शुचि ॥५०॥

---

[1] P. M. विनीयताम् ।

मलपङ्कधरा दिगम्बरा प्रकृतिस्थैर्नखदन्तरोमभिः ।
यदि सा तव सुन्दरी भवेत् नियतं तेऽद्य न सुन्दरी भवेत् ॥५१॥

स्रवतीमशुचिं स्पृशेच्च कः सघृणो जर्ज्जरभाण्डवत् स्त्रियम् ।
यदि केवलया त्वचावृता न भवेन्मक्षिकपत्रमात्रया ॥५२॥

त्वचवेष्टितमस्थिपञ्जरम् यदि कायं समवैषि योषिताम् ।
मदनेन च कृष्यसे बलादघृणः खल्वधृतिश्च मन्मथ[ः] ॥५३॥

शुभतामशुभेषु कल्पयन् नखदन्तत्वचकेशरोमसु ।
अविचक्षण किं न पश्यसि प्रकृतिञ्च प्रभवञ्च योषिताम् ॥५४॥

तदवेत्य मनःशरीरयोर्वनिता दोषवतीर्विशेषतः ।
चपलं भवतोत्सुकं मनः प्रतिसङ्ख्यानबलेन वार्य्यताम् ॥५५॥

श्रुतवान् मतिमान् कुलोद्गतः परमस्य प्रशमस्य भाजनम् ।
उपगम्य यथा तथा पुन र्न हि भेत्तुं नियमं त्वमर्हसि ॥५६॥

अभिजनमहतो मनस्विनः प्रिययशसो बहुमानमिच्छतः ।
निधनमपि वरं स्थिरात्मनः च्युतविनयस्य नचैव[1] जीवितम् ॥५७॥

बद्धा यथा हि कवचम् प्रगृहीतचापो
निन्द्यो भवत्यपसृतः समराद्रथस्थः ।
भैक्षाकमभ्युपगतः परिगृह्य लिङ्गम्
निन्द्यस्तथा भवति कामहृतेन्द्रियाश्वः ॥५८॥

हास्यो यथा च परमाभरणाम्बरस्रग्
भैक्ष्यं चरन् धृतधनुश्चलचित्रमौलिः ।

---

१ P. M. तवैव ।

वैरूप्यमभ्युपगतः परपिण्डभोजी
हास्यस्तथा गृहसुखाभिमुखः सतृष्णः ॥५९॥

यथा स्वन्नं भुक्त्वा परमशयनीयेऽपि शयितो
वराहो निर्म्मुक्तः पुनरशुचि धावेत् परिचितम् ।
तथा श्रेयः शृण्वन् प्रशमसुखमास्वाद्य गुणवद्
वनं शान्तं हित्वा गृहमभिलषेत् कामतृषितः ॥६०॥

यथोल्का हस्तस्था दहति पवनप्रेरितशिखा
यथा पादाक्रान्तो दशति भुजगः क्रोधरभसः ।
यथा हन्ति व्याघ्रः शिशुरपि गृहीतो गृहगतः
तथा स्त्रीसंसर्गो बहुविधमनर्थाय भवति ॥६१॥

तद्विज्ञाय मनःशरीरनियतान् नारीषु दोषानिमान्
मत्वा कामसुखं नदीजलचलं क्लेशाय शोकाय च ।
दृष्ट्वा दुर्ब्बलमाम[१]पात्रसदृशम् मृत्यूपसृष्टं जगत्
निर्मोक्षाय कुरुष्व बुद्धिमतुलामुत्कण्ठितुं नार्हसि ॥६२॥

इति सौन्दरनन्दे महाकाव्ये स्त्रीविघातो नाम
अष्टमः सर्गः ।

---

१ P. M. ०मान० ।

## नवमः सर्गः

अथैवमुक्तोऽपि स तेन भिक्षुणा
जगाम नैवोपशमं प्रियां प्रति ।
तथाहि तामेव तदा स चिन्तयन्
न तस्य शुश्राव विसंज्ञबान्धवः[1] ॥१॥

यथा हि वैद्यस्य चिकीर्षतः शिवम्
वचो न गृह्णाति मुमूर्षुरातुरः ।
तथैव मत्तो बलरूपयौवनैः
हितं न जग्राह स तस्य तद्वचः ॥२॥

न चात्र चित्रं यदि रागपाप्मना
मनोऽभिभूयेत तमोवृतात्मनः ।
नरस्य पाप्मा हि तदा निवर्त्तते
यदा भवत्यन्तगतं तमस्तनु ॥३॥

ततस्तथाक्षिप्तमवेक्ष्य तं तदा
बलेन रूपेण च यौवनेन च ।
गृहप्रयाणं प्रति च व्यवस्थितं
शशास नन्दं श्रमणः स शान्तये ॥४॥

बलञ्च रूपञ्च नवञ्च यौवनम्
तथावगच्छामि यथावगच्छसि ।

---

1 P. L. M. lacuna. P. M. विसंज्ञा० ।

अहन्त्विदं ते चयमव्यवस्थितम्
यथावबुद्धो न तथा च बुध्यसे ॥५॥

इदं हि रोगायतनं जरावशम्
नदीतटानोकहवच्चलाचलम् ।
न वेत्सि देहं जलफेनदुर्ब्बलम्
बलस्थतामात्मनि येन मन्यसे ॥६॥

यदान्नपानाशनयानकर्म्मणा-
मसेवनादप्यतिसेवनादपि ।
शरीरमासन्नविपत्ति दृश्यते
बलेऽभिमानस्तव केन हेतुना ॥७॥

हिमातपव्याधिजराक्षुदादिभिः
यदाप्यनर्थैरुपनीयते जगत् ।
जलं शुचौ मास इवार्करश्मिभिः
क्षयं व्रजेत् किं बलदृप्त मन्यसे ॥८॥

त्वगस्थिमांसक्षतजात्मकं यदा
शरीरमाहारवशेन तिष्ठति ।
अजस्रमार्त्तं सततप्रतिक्रियम्
बलान्वितोऽस्मीति कथं विहन्यसे ॥९॥

यथा घटं मृण्मयमाममाश्रितो
नरस्तितीर्षेत् क्षुभितं महार्णवम् ।
समुच्छ्रयं तद्वदसारमुद्वहन्-
बलं व्यवस्येत् विषयार्थमुद्यतः ॥१०॥

शरीरमामादपि मृण्मयाद् घटात्
इदन्तु निःसारतमं मतं मम ।
चिरं हि तिष्ठेत् विधिवद्धृतो घ[टः]
समुच्छ्रयोऽयं सुधृतोऽपि भिद्यते ॥११॥

यदाम्बुभूवाय्वनलाश्च धातवः
सदा [नि]रुद्धा विषमा इवोरगाः ।
भवन्त्यनर्थाय शरीरमाश्रिताः
कथं बलं रोगविधौ व्यवस्यसि ॥१२॥

प्रयान्ति मन्त्रैः प्रशमं भुजङ्गमा
न मन्त्रसाध्यास्तु भवन्ति धातवः ।
केचिच्च कञ्चिच्च दशन्ति पन्नगाः
सदा च सर्व्वञ्च तुदन्ति धातवः ॥१३॥

इदं हि शय्याशनपानभोजनैः
गुणैः शरीरं चिरमप्यवेक्षितम् ।
न मर्षयत्येकमपि व्यतिक्रमम्
यतो [1]महाशीविषवत् प्रकुप्यति ॥१४॥

यदा हिमार्त्तो ज्वलनं निषेवते
हिमं निदाघाभिहतोऽभिकाङ्क्षति ।
क्षुधान्वितोऽन्नं सलिलं तृषान्वितो
बलं कुतः किञ्च कथञ्च कस्य च ॥१५॥

---

१ P. M. महाही० ।

तदेवमाज्ञाय शरीरमातुरम्
बलान्वितोऽस्मीति न मन्तुमर्हसि ।
असारमस्वन्तमनिश्चितं जगत्
जगत्यनित्ये बलमव्यवस्थितम् ॥१६॥

क्व कार्त्तवीर्य्यस्य बलाभिमानिनः
सहस्रबाहोर्बलमर्ज्जुनस्य तत् ।
चकर्त्त बाहून् युधि यस्य भार्गवो
महान्ति शृङ्गाण्यशनिर्गिरेरिव ॥१७॥

क्व तद्बलं कंसविकर्षिणो हरे-
स्तुरङ्गराजस्य पुटावभेदिनः[1] ।
यमेकबाणेन निजघ्निवान् जरा
क्रमागता रूपमिवोत्तमं जरा ॥१८॥

दिते[:] सुतस्यामररोषकारिणः
चमूरुचेर्वा नमुचेः क्व तद्बलम् ।
यमाहवे क्रुद्धमिवान्तकं स्थितम्
जघान फेनावयवेन वासवः ॥१९॥

बलं कुरूणां क्व च तत्तदाभवत्
युधि ज्वलित्वा तरसौजसा च ये ।
समित्समिद्धा ज्वलना इवाध्वरे
हतासवो भस्मनि पर्य्यवस्थिताः ॥२०॥

---

१ P. M. पुच्चेर ।

अतो विदित्वा बलवीर्य्य[१]मानिनाम्
बलान्वितानामवमर्द्दितं बलम् ।
जगज्जराम्टत्युवशं विचारयन्
[२]बलेऽभिमानं न विधातुमर्हसि ॥२१॥

बलं महद्वा यदि येन मन्यसे
कुरुष्व युद्धं सह तावदिन्द्रियैः ।
जयश्च [३]तेऽत्रास्ति महच्च ते बलं
पराजयश्चेद् वितथं च ते बलम् ॥२२॥

तथा हि वीराः पुरुषा न ते मता
जयन्ति ये साश्वरथद्विपानरीन् ।
यथा मता वीरतरा मनीषिणो
जयन्ति लोलानि ष[डि]न्द्रियाणि ये ॥२३॥

अहं वपुष्मानिति यच्च मन्यसे
विचक्षणं नैतदिदं च गृह्यताम् ।
क्व तद्वपुः सा च वपुष्मती तनुः
गदस्य साम्यस्य च सारणस्य च ॥२४॥

यथा मयूरश्चलचित्रचन्द्रको
बिभर्त्ति रूपं गुणवत् स्वभावतः ।
शरीरसंस्कारगुणादृते तथा
बिभर्षि रूपं यदि रूपवानसि ॥२५॥

---

१ P. M. P. L. M. ०विर्य्य।
२ P. M. परे, P. L. M. पले। ३ P. M. तेन।

यदि प्रतीपं वृणुयान्न वाससा
न शौचकाले यदि संस्पृशेदपः ।
मृजाविशेषं यदि नाददीत वा
वपु र्वपुष्मन् वद कीदृशं भवेत् ॥२६॥

नवं वयश्चात्मगतं निशाम्य यद्
गृहोन्मुखं ते विषयाप्तये मनः ।
नियच्छ तच्छैलनदी[1]रयोपमम्
द्रुतं हि गच्छत्यनिवर्त्ति यौवनम् ॥२७॥

ऋतुर्व्यतीतः परिवर्त्तते पुनः
क्षयं प्रयातः पुनरेति चन्द्रमाः ।
गतं गतं नैव तु संनिवर्त्तते
जलं नदीनाञ्च नृणाञ्च यौवनम् ॥२८॥

विवर्णितश्मश्रु वलीविकुञ्चितम्
विशीर्णदन्तं शिथिलभ्रु निष्प्रभम् ।
यदा मुखं द्रक्ष्यसि जर्ज्जरं तदा
जराभिभूतो विमदो भविष्यसि ॥२९॥

निषेव्य पानं मदनीयमुत्तमम्
निशाविवासेषु चिराद्विमाद्यति ।
नरस्तु मत्तो बलरूपयौवनैः
न कश्चिदप्राप्य जरां विमाद्यति ॥३०॥

यथेक्षुरभ्यन्तरसंप्रपिण्डितो

---

[1] P. M. तलेनदी० ।

भुवि प्रविद्धो दहनाय शुष्यते ।
तथा जरायन्त्रनिपिण्डिता तनु-
र्निपीतसारा मरणाय तिष्ठति ॥२१॥
यथा हि नृभ्यां करपत्रपीडितम्
समुच्छ्रितं दारु भिनत्त्यनेकधा ।
तथोच्छ्रितां पातयति प्रजामिमाम्
अहर्निशाभ्यामुपसंहिता जरा ॥२२॥
स्मृतेः प्रमोषो वपुषः पराभवो
रतेः क्षयो वा श्रुतिचक्षुषां ग्रहः ।
श्रमस्य योनि र्बलवीर्य्ययो र्वधो
जरासमो नास्ति शरीरिणां रिपुः ॥२३॥
इदं विदित्वा [वि]निधत्स्व दैशिकम्
जराभिधानं जगतो महद्भयम् ।
अहं वपुष्मान् करवान् युवेति वा
न मा[न]मारोढुमनार्य्यमर्हसि ॥२४॥
अहं ममेत्येव च रक्तचेतसाम्
शरीरसंज्ञो भवज(य): कलौ ग्रहः ।
तमुत्सृजैवं यदि शाम्यते भवात्
भयं ह्यहं चेति ममेति वर्त्तते ॥२५॥
यदा शरीरं न वशोऽस्ति[1] कस्यचित्
निरस्यमानं विविधैरुपप्लवैः ।

---

[1] P. M. शरीरे न वशोऽस्ति ।

कथं क्षमं वेत्तुमहं ममेति वा
शरीरसंज्ञं गृहमापदामिदम् ॥३६॥

सपन्नगे यः कुगृहे सदाऽशुचौ
रमेत नित्यं प्रतिसंस्कृतेऽबले ।
स दुष्टधातावशुचौ चलाचले
रमेत काये विपरीतदर्शनः ॥३७॥

यथा प्रजाभ्यः कुनृपो बलाद् बली
हरत्यशेषं च न चाभिरक्षति ।
तथैव कायो व्यसनादिसाधनम्
हरत्यशेषञ्च न चानुवर्त्तते ॥३८॥

यथा प्ररोहन्ति तृणान्ययत्नतः
क्षितौ प्रयत्नात्तु भवन्ति शालयः ।
तथैव दुःखानि भवन्त्ययत्नतः
सुखानि यत्नेन भवन्ति वा न वा ॥३९॥

शरीरमार्त्तं परिकर्षतश्चलम्
न चास्ति किञ्चित् परमार्थतः सुखम् ।
सुखं हि दुःखप्रतिकारसेवया
स्थिते च दुःखे तनुनि व्यवस्यति ॥४०॥

यथानपेक्ष्याग्र्यमपीप्सितं सुखम्
प्रबाधते दुःखमुपेतमण्वपि ।
तथानवेक्ष्यात्मनि दुःखमागतम्
न विद्यते किञ्चन कस्यचित् सुखम् ॥४१॥

शरीरमीदृक् बहुदुःखमध्रुवम्
फलानुरोधादथवावगच्छसि ।
द्रवत् फलेभ्यो धृतिरश्मिभिर्मनो-
ऽभिगृह्यतां गौरिव शस्यलालसा ॥४२॥

न कामभोगा हि भवन्ति तृप्तये
हवींषि दीप्तस्य विभावसोरिव ।
यथा यथा कामसुखेषु वर्त्तते
तथा तथेच्छा विषयेषु वर्द्धते ॥४३॥

यथा च कुष्ठव्यसनेन दुःखितः
प्रतापयन्नैव शमं निगच्छति ।
तथेन्द्रियार्थेष्वजितेन्द्रियश्चरन्
न कामभोगैरुपशान्तिमृच्छति ॥४४॥

यथा हि भैषज्यसुखाभिकाङ्क्षया
भजेत रोगान्न भजेत तत्क्षमम् ।
तथा शरीरे बहुदुःखभाजने
रमेत मोहाद् विषयाभिकाङ्क्षया ॥४५॥

अनर्थकामः पुरुषस्य यो जनः
स तस्य शत्रुः किल तेन कर्म्मणा ।
अनर्थमूला विषयाश्च केवला
ननु प्रहेया विषया यथारयः ॥४६॥

इहैव भूत्वा रिपवो वधात्मकाः
प्रयान्ति काले पुरुषस्य मित्रताम् ।

परत्र चैवेह च दुःखहेतवो
भवन्ति कामा न तु कस्यचित् शिवाः ॥४७॥
यथोपयुक्तम् रसवर्णगन्धवत्
वधाय किम्पाकफलम् न पुष्टये ।
निषेव्यमाणा विषयाश्चलात्मनो
भवन्त्यनर्थाय तथा न भूतये ॥४८॥
तदेतदाज्ञाय विपाप्मनात्मना
विमोक्षधर्म्मा ह्युपसंहितं हितम् ।
जुषस्व मे सज्जनसम्मतं मतम्
प्रचक्ष्व वा निश्चयमुद्गिरन् गिरम् ॥४९॥
इति हितमपि बह्वपीदमुक्तः
श्रुतमहता श्रमणेन तेन नन्दः ।
न धृतिमुपययौ च न शर्म्म लेभे
द्विरद इवातिमदो मदान्धचेताः ॥५०॥
नन्दस्य भावमवगम्य ततः स भिक्षुः
पारिप्लवं गृहसुखाभिमुखं न धर्म्मे ।
सत्त्वाशयानुशयभावपरीक्षकाय ।
बुद्धाय तत्त्वविदुषे कथयाञ्चकार ॥५१॥

सौन्दरनन्दे महाकाव्ये मदापवादो नाम
नवमः सर्गः ॥

---

# दशमः सर्गः

श्रुत्वा ततः सद्व्रतमुत्सिसृक्षुं भार्य्यांदिदृक्षुं भवनं विविक्षुम् ।
नन्दं निरानन्दमपेतधैर्य्यं अभ्युज्जिहीर्षु र्मुनिराजुहाव ॥१॥

तं प्राप्तमप्राप्तविमोक्षमार्गं पप्रच्छ चित्तस्खलितं सुचित्तः ।
स ह्रीमते ह्रीविततो जगाद स्वं निश्चयं निश्चयकोविदाय ॥२॥

नन्दं विदित्वा सुगतस्ततस्तं भार्य्याभिधाने तमसि भ्रमन्तम् ।
पाणौ गृहीत्वा वियदुत्पपात मलं जले साधुरिवोज्जिहीर्षुः ॥३॥

काषायवस्त्रौ कनकावदातौ विरेजतुस्तौ नभसि प्रसन्ने ।
अन्योन्यसंश्लिष्टविकीर्णपक्षौ सरःप्रकीर्णाविव चक्रवाकौ ॥४॥

तौ देवदारूत्तमगन्धवन्तम् नदीसरःप्रस्रवणौघवन्तम् ।
आजग्मतुः कञ्चन धातुमन्तम् देवर्षिमन्तं हिमवन्तमाशु ॥५॥

तस्मिन् गिरौ चारणसिद्धजुष्टे शिवे हविर्धूमकृतोत्तरीये ।
अगम्यपारस्य निराश्रयस्य तौ तस्थतुर्द्वीप इवाम्बरस्य ॥६॥

शान्तेन्द्रिये तत्र मुनौ स्थिते तु सविस्मयं दिक्षु ददर्श नन्दः ।
दरीश्च कुञ्जांश्च वनौकसश्च विभूषणं रक्षणमेव चाद्रेः ॥७॥

बह्वायते तत्र सिते हि शृङ्गे सङ्क्षिप्तबर्हः शयितो मयूरः ।
भुजे बलस्यायतपीनबाहोः वैदूर्य्यकेयूर इवाबभासे ॥८॥

मनःशिलाधातुशिलाश्रयेण पीतीकृताङ्गो[1] विरराज सिंहः ।
[2]सन्तप्तचामीकरभक्तिचित्रम् रूप्याङ्गदं शीर्णमिवाम्बरस्य ॥९॥

व्याघ्रः क्लमव्यायतखेलगामी लाङ्गूलचक्रेण कृतापसव्यः ।
बभौ गिरेः प्रस्रवणं पिपासुर्दित्सन् पितृभ्योऽम्बु इवावतीर्णः ॥१०॥

---

१ P. M. तापीकृताङ्गो T.   २ P. M. तं तप्त T.

चलत्कदम्बे हिमवन्नितम्बे तरौ प्रलम्बे चमरो ललम्बे ।
छेत्तुं विलग्नं न शशाक बालं कुलोद्गतः प्रीतिमिवार्य्यवृत्तः ॥१ १॥

सुवर्णगौराश्च किरातसंघा मयूरपिच्छो[1]ज्ज्वलगात्ररेखाः ।
शार्दूलपातप्रतिमा गुहाभ्यो निष्पेतुरुद्गार इवाचलस्य ॥१ २॥

दरीचरीणामतिसुन्दरीणां मनोहरश्रोणिकुचोदरीणाम् ।
वृन्दानि रेजुर्दिशि किन्नरीणां पुष्पोत्किराणामिव वल्लरीणाम् ॥१ ३॥

नगान्नगस्योपरि देवदारूनायासयन्तः कपयो विचेरुः ।
तेभ्यः फलं नापुरतोऽपजग्मुः मोघप्रसादेभ्य इवेश्वरेभ्यः ॥१ ४॥

तस्मात्तु यूथादपसार्य्यमाणां निष्पीडितालक्तकरक्तवक्त्राम् ।
शाखामृगीमेकविपन्नदृष्टिं दृष्ट्वा मुनिर्नन्दमिदं बभाषे ॥१ ५॥

का नन्द रूपेण च चेष्टया च संपश्यतश्चारुतरा मता ते ।
एषा मृगी वैकविपन्नदृष्टिः स वा जनो यत्र गता तवेष्टिः ॥१ ६॥

इत्येवमुक्तः सुगतेन नन्दः कृत्वा स्मितं किञ्चिदिदं जगाद ।
क चोत्तमस्त्री भगवन् वधूस्ते मृगी नगक्लेशकरी क चैषा ॥१ ७॥

ततो मुनिस्तस्य निशम्य वाक्यं हेत्वन्तरं किञ्चिदवेक्षमाणः ।
आलम्ब्य नन्दं प्रययौ तथैव क्रीडावनं वज्रधरस्य राज्ञः ॥१ ८॥

ऋतावृतावाकृतिमेक एके क्षणे क्षणे बिभ्रति यत्र वृक्षाः ।
चित्रां समस्तामपि केचिदन्ये षण्णामृतूनां श्रियमुद्वहन्ति ॥१ ९॥

पुष्यन्ति केचित् सुरभीरुदारा मालाः स्रजश्च ग्रथिता विचित्राः ।
कर्णानुकूलानवतंसकांश्च प्रत्यर्थिभूतानिव कुण्डलानाम् ॥२ ०॥

---

१ P. M. ०पित्तो० ।

रक्तानि फुल्लाः कमलानि यत्र प्रदीपवृक्षा इव भान्ति वृक्षाः ।
प्रफुल्लनीलोत्पलरोहिणोऽन्ये सोन्मीलिताक्षा इव भान्ति वृक्षाः ॥२१॥
नानाविरागाण्यथ पाण्डराणि सुवर्णभक्तिव्यवभासितानि ।
अतान्तवान्येकघनानि यत्र सूक्ष्माणि वासांसि फलन्ति वृक्षाः ॥२२॥
हारान् मणीनुत्तमकुण्डलानि केयूरवर्य्याण्यथ नूपुराणि ।
एवंविधान्याभरणानि यत्र स्वर्गानुरूपाणि फलन्ति वृक्षाः ॥२३॥
वैदूर्य्यनालानि च काञ्चनानि पद्मानि वज्राङ्कुरकेशराणि ।
स्पर्शक्षमाण्युत्तमगन्धवन्ति रोहन्ति निष्कम्पतला नलिन्यः ॥२४॥
पश्चायतांश्चैव ततांश्च तांस्तान् वाद्यस्य हेतून् सुखरान् घनांश्च ।
फलन्ति वृक्षा मणिहेमचित्रा क्रीडासहायांस्त्रिदशालयानाम् ॥२५॥
मन्दारवृक्षांश्च कुशेशयांश्च पुष्पानतान् कोकनदांश्च वृक्षान् ।
आक्रम्य माहात्म्यगुणैर्व्विराजन् राजायते यत्र स पारिजातः ॥२६॥
कृष्टे तपःशीलफलैरखिन्नैस्त्रिपिष्टपक्षेत्रतले प्रसूताः ।
एवंविधा यत्र सदानुवृत्ता दिवौकसां भोगविधानवृक्षाः ॥२७॥
मनःशिलाभैर्वदनैर्विहङ्गा यत्राक्षिभिः स्फाटिकसन्निभैश्च ।
शादैश्च पक्षैरतिलोहितान्तैः माञ्जिष्ठकैरर्द्धसितैश्च पादैः ॥२८॥
चित्रैः सुवर्णच्छदनैस्तथान्यैः वैदूर्य्यनीलैर्नयनैः प्रसन्नैः ।
विहङ्गमा शिञ्जिरिकाभिधाना रुतैर्मनःश्रोत्रहरैर्भ्रमन्ति ॥२९॥
रक्ताभिरग्रेषु च वल्लरीभिर्मध्येषु चामीकरपिञ्जराभिः ।
वैदूर्य्यवर्णाभिरुपान्तमध्येष्वलङ्कृता यत्र खगाश्चरन्ति ॥३०॥
रोचिष्णवो नाम पतत्रिणोऽन्ये दीप्ताग्निवर्णोज्ज्वलितैरिवास्यैः ।
भ्रमन्ति दृष्टीर्वपुषाक्षिपन्तः स्वनैः शुभैरप्सरसो हरन्तः ॥३१॥

यत्रेष्टचेष्टाः सततप्रहृष्टा निरर्त्तयो निर्ज्जरसो विशोकाः ।
स्वैः कर्म्मभिर्हीनविशिष्टमध्याः स्वयंप्रभाः पुण्यकृतो रमन्ते ॥२२॥
नित्योत्सवं तच्च निशाम्य लोकं निस्तन्द्रिनिद्रारतिशोकरोगम् ।
नन्दो जरामृत्युवशं सदार्त्तं मेने श्मशानप्रतिमं नृलोकम् ॥२३॥
ऐन्द्रं वनं तच्च ददर्श नन्दः समन्ततो विस्मयफुल्लदृष्टिः ।
हर्षान्विताश्चाप्सरसः परीयुः सगर्व्वमन्योन्यमवेक्षमाणाः ॥२४॥
सदा युवत्यो मदनैककार्य्याः साधारणाः पुण्यकृतां विहाराः ।
दिव्याश्च निर्द्दोषपरिग्रहाश्च तपःफलस्याश्रयणं सुराणाम् ॥२५॥
तासां जगुर्धीरमुदात्तमन्याः पद्मानि काश्चित् ललितं बभञ्जुः ।
अन्योन्यहर्षात् ननृतुस्तथान्याश्चित्राङ्गहाराः स्तनभिन्नहाराः ॥२६॥
पूर्व्वं तपोमूल्यपरिग्रहेण स्वर्गक्रयार्थं कृतनिश्चयानाम् ।
मनांसि खिन्नानि तपोधनानां हरन्ति यत्राप्सरसो लडन्त्यः ॥२७॥
कासाञ्चिदासां वदनानि रेजुर्वनान्तरेभ्यश्चलकुण्डलानि ।
व्याविद्धपर्णेभ्य इवाकरेभ्यः पद्मानि कादम्बविघट्टितानि ॥२८॥
ता निःसृताः प्रेक्ष्य वनान्तरेभ्यस्तडित्पताका इव तोयदेभ्यः ।
नन्दस्य रागेण तनुर्विवेपे जले चले चन्द्रमसः प्रभेव ॥२९॥
वपुश्च दिव्यं ललिताश्च चेष्टास्ततः स तासां मनसा जहार ।
कौतूहलावर्ज्जितया तु दृष्ट्या संश्लेषतर्षादिव जातरागः ॥४०॥
स जाततर्षोऽप्सरसः पिपासुः तत्प्राप्तयेऽधिष्ठितविक्लवार्त्तः ।
लोलेन्द्रियाश्वेन मनोरथेन जेह्रीयमाणो न धृतिं जगाम ॥४१॥
यथा मनुष्या मलिनं हि वासः क्षारेण भूयो मलिनीकरोति ।
मलक्षयार्थं न मलोद्भवार्थं रजस्तथास्मै मुनिराचकर्ष ॥४२॥

दोषा[ं]श्च (ख)काया[द्] भिषगुज्जिहीर्षु र्भूयो यथा क्लेशयितुं यतेत ।
रागं तथा तस्य मुनिर्जिघांसुर्भूयस्तरं रागमुपानिनाय ॥४३॥
दीपप्रभां हन्ति यथा च काले सहस्ररश्मेरुदितस्य दीप्तिः ।
मनुष्यलोके द्युतिमङ्गनानामन्तर्दधात्यप्सरसां तथा श्रीः ॥४४॥
महच्च रूपं स्वणु हन्ति रूपं शब्दो महान् हन्ति च शब्दमल्पम् ।
गुर्व्वी रुजा हन्ति रुजां सुमृद्वीं सर्व्वो महान् हेतुरणोर्वधाय ॥४५॥
मुनेः प्रभावाच्च शशाक नन्दस्तद्दर्शनं सोढुमसह्यमन्यैः ।
अवीतरागस्य हि दुर्ब्बलस्य मनो दहेदप्सरसां वपुःश्रीः ॥४६॥
मत्वा ततो नन्दमुदीर्णरागं भार्य्यानुरोधादपवृत्तरागम् ।
रागेण रागं प्रतिहन्तुकामो मुनिर्विरागो गिरमित्युवाच ॥४७॥
एताः स्त्रियः पश्य दिवौकसस्त्वं निरीक्ष्य च ब्रूहि यथाथ तत्त्वम् ।
एताः कथं रूपगुणैर्मतास्ते स वा जनो यत्र गतं मनस्ते ॥४८॥
अथाप्सरस्स्वेव निविष्टदृष्टी रागाग्निनान्तर्हृदये प्रदीप्तः ।
सगद्गदं कामविषक्तचेताः कृताञ्जलिर्वाक्यमुवाच नन्दः ॥४९॥
हर्य्यङ्गनासौ मुषितैकदृष्टिर्यदन्तरे स्यात् तव नाथ वध्वाः ।
तदन्तरेऽसौ कृपणा वधूस्ते वपुष्मतीरप्सरसः प्रतीत्य ॥५०॥
आस्था यथा पूर्वमभून्न काचित् अन्यासु मे स्त्रीषु निशाम्य भार्य्याम् ।
तस्यां तथा संप्रति काचिदास्था न मे निशाम्यैव हि रूपमासाम् ॥५१॥
यथा प्रतप्तो मृदुनातपेन दह्येत कश्चिन्महतानलेन ।
रागेण पूर्व्वं मृदुनाभितप्तो रागाग्निनानेन तथाभिदह्ये ॥५२॥
वाग्वारिणा मां परिषिञ्च तस्माद् यावन्न दह्ये स इवाब्जचक्षुः ।
रागाग्निरद्यैव हि मां दिधक्षुः कक्षं स वृक्षाग्रमिवोत्थितोऽग्निः ॥५३॥

प्रसीद सीदामि विमुञ्च मां मुने वसुन्धराधैर्य्य न धैर्य्यमस्ति मे ।
असून् विमोक्ष्यामि विमुक्तमानसः प्रयच्छ वा वागमृतं मुमूर्षवे ॥५४॥
अनर्थभोगेन विघातदृष्टिना प्रमाददंष्ट्रेण तमोविषाग्निना ।
अहं हि दष्टो हृदि मन्मथाहिना विधत्स्व तस्मादगदं महाभिषक् ॥५५॥
अनेन दष्टो मदनाहिनाऽहिना न कश्चिदात्मन्यनवस्थितः स्थितः ।
मुमोह बोद्ध्यो[र्हि] चलात्मनो मनो बभूव धीमांश्च स शन्तनुस्तनुः ॥५६॥
स्थिते विशिष्टे त्वयि संश्रये श्रये यथा न यायी(मौ) वक्रसंदिशं दिशम् ।
यथा च लब्ध्वा व्यसनक्षयं क्षयं व्रजामि तन्मे कुरु शंसतः सतः ॥५७॥

ततो जिघांसुर्हृदि तस्य तत्तमस्तमोनुदो नक्तमिवोत्थितं तमः ।
महर्षिचन्द्रो जगतस्तमोनुदस्तमःप्रहीणो निजगाद गौतमः ॥५८॥
धृतिं परिष्वज्य विधूय विक्रियां निगृह्य तावत् श्रुतिचेतसी शृणु ।
इमा यदि प्रार्थयसे त्वमङ्गना विधत्स्व शुल्कार्थमिहोत्तमं तपः ॥५९॥
[1]इमा हि शक्यन्न बलान्न सेवया न संप्रदानेन न रूपवत्तया ।
इमा ह्रियन्ते खलु धर्मचर्य्यया स चेत् प्रहर्षस्चर धर्ममादृतः ॥६०॥
इहाधिवासो दिवि दैवतैः समं वनानि रम्याण्यजराश्च योषितः ।
इदं फलं स्वस्य शुभस्य कर्मणः न दत्तमन्येन न वाप्यहेतुतः ॥६१॥
क्षितौ मनुष्यो धनुरादिभिः श्रमैः स्त्रियः कदाचिद् विलभेत वा न वा ।
असंशयं यत्त्विह धर्मचर्य्यया भवेयुरेता दिवि पुण्यकर्मणः ॥६२॥
तदप्रमत्तो नियमे समुद्यतो रमस्व यद्यप्सरसोऽभिलिप्ससे ।
अहं च तेऽत्र प्रतिभूः स्थिरे व्रते यथा त्वमाभिर्नियतं समेष्यसि ॥६३॥

---

१ P. L. M. इमा हि शक्या एव गात्र सेवया ।

अतःपरं परममिति व्यवस्थितः परां धृतिं परममुनौ चकार सः ।
ततो मुनिः पवन इवाम्बरात् पतन् प्रगृह्य तं पुनरगमन् महीतलम् ॥
६४॥

इति सौन्दरनन्दे महाकाव्ये स्वर्गनिदर्शनो
नाम दशमः सर्गः ।

## एकादशः सर्गः

ततस्ता योषितो दृष्ट्वा नन्दो नन्दनचारिणीः ।
बबन्ध नियमस्तम्भे दुर्दमं चपलं मनः ॥१॥

सोऽनिष्टनैष्कर्म्म्यरसो म्लानतामरसोपमः ।
चचार विरसो धर्म्मं निवेश्याप्सरसो हृदि ॥२॥

तथा लोलेन्द्रियो भूत्वा दयितेन्द्रियगोचरः ।
इन्द्रियार्थवशादेव बभूव नियतेन्द्रियः ॥३॥

कामचर्य्यासु कुशलो भिक्षुचर्य्यासु विक्लवः ।
परमाचार्य्यविष्टब्धो ब्रह्मचर्य्यं चचार सः ॥४॥

संवृतेन च शान्तेन तीव्रेण मदनेन च ।
जलाग्न्यो[1]रिव संसर्गात् शशाम[2] च शुशोष च ॥५॥

स तावद् दर्शनीयोऽपि वैरूप्यमगमत् परम् ।
चिन्तयाप्सरसाञ्चैव नियमेनायतेन च ॥६॥

प्रस्तावेष्वपि भार्य्यायाः प्रियभार्य्यस्तथापि सः ।
वीतराग इवातस्थौ न जहर्ष न चुक्षुभे ॥७॥

तं व्यवस्थितमाज्ञाय भार्य्यारागात् पराङ्मुखम् ।
अभिगम्याब्रवीत् नन्दमानन्दः प्रणयादिदम् ॥८॥

अहो सदृशमारब्धं श्रुतस्याभिजनस्य च ।
निगृहीतेन्द्रियः स्वस्थो नियमे यदि संस्थितः ॥९॥

---

१ P. M. जलाग्नेः T.    २ P. M. प्रशशास T.

अभिव्यक्तस्य कामेषु रागिणो विषयात्मनः ।
यदियं संविदुत्पन्ना नेयमल्पेन हेतुना ॥१०॥

व्याधिरल्पेन यत्नेन मृदुः प्रतिनिवार्य्यते ।
प्रबलः प्रबलैरेव यत्नैर्नश्यति वा न वा ॥११॥

दुर्हरो मानसो व्याधिर्बलवांश्च तवाभवत् ।
विनिवृत्तो यदि स ते सर्व्वथा धृतिमानसि ॥१२॥

दुष्करं साधनार्य्येण मानिना चैव मार्दवम् ।
अतिसर्गश्च लुब्धेन ब्रह्मचर्य्यञ्च रागिणा ॥१३॥

एकस्तु मम सन्देहस्तवास्यां नियमे धृतौ ।
अत्रानुनयमिच्छामि वक्तव्यं यदि मन्यसे ॥१४॥

आर्ज्जवाभिहितं वाक्यं न च गन्तव्यमन्यथा ।
रूक्षमप्याशये शुद्धे [1]रूक्षतां नेति सज्जनः ॥१५॥

अप्रियं हि हितं स्निग्धमस्निग्धमहितं प्रियम् ।
दुर्लभं तु प्रियहितं स्वादु पथ्यमिवौषधम् ॥१६॥

विश्वासश्चार्थचर्य्या च सामान्यं सुखदुःखयोः ।
मर्षणं प्रणयश्चैव मित्रवृत्तिरियं सताम् ॥१७॥

तदिदं त्वां विवक्षामि प्रणयान्न जिघांसया ।
त्वच्छ्रेयो हि विवक्षा मे यते नार्हाम्युपेक्षितुम् ॥१८॥

अप्सरोभृतको धर्म्मं चरसीत्यभिधीयसे ।
किमिदं भूतमाहोस्वित् परिहासोऽयमीदृशः ॥१९॥

---

1 P. L. M. रूक्षतो ।

यदि तावदिदं सत्यं वच्याम्यत्र यदौषधम् ।
श्रौद्धत्यमथ वक्तृणामभिधास्यामि तद्रुजः ॥२०॥

श्लक्ष्णपूर्व्वमथो तेन हृदि सोऽभिहतस्तदा ।
ध्यात्वा दीर्घं निशश्वास किञ्चिच्चावाङ्मुखोऽभवत् ॥२१॥

ततस्तस्येङ्गितं ज्ञात्वा मनःसंकल्पसूचकम् ।
बभाषे वाक्यमानन्दो मधुरोदर्कमप्रियम् ॥२२॥

आकारेणावगच्छामि तव धर्म्मप्रयोजनम् ।
यज्ज्ञात्वा त्वयि जातं मे हास्यं कारुण्यमेव च ॥२३॥

यथासनार्थं स्कन्धेन कश्चिद् गुर्व्वीं शिलां वहेत् ।
तद्वत् त्वमपि कामार्थं नियमं वोढुमुद्यतः ॥२४॥

तिताडयिषया दृष्टो यथा मेषोऽपसर्पति ।
तद्वदब्रह्मचर्य्याय ब्रह्मचर्य्यमिदं तव ॥२५॥

चिक्रीषन्ति यथा पण्यं वणिजो लाभलिप्सया ।
धर्म्मचर्य्या तव तथा पण्यभूता न शान्तये ॥२६॥

यथा फलविशेषार्थं बीजं वपति कर्षकः ।
तद्वद्विषयकार्पण्यात् विषयांस्त्यक्तवानसि ॥२७॥

आकाङ्क्षेच्च यथा रोगं प्रतीकारसुखेप्सया ।
दुःखमन्विच्छति भवान् तथा विषयतृष्णया ॥२८॥

यथा पश्यति मध्वेव[१] न प्रपातमवेक्षते ।
पश्यस्यप्सरसस्तद्वद् भ्रंशमन्ते न पश्यसि ॥२९॥

---

१ P. L. M. मध्येव M. P. मध्येव ।

हृदि कामाग्निना दीप्ते कायेन वहतो व्रतम् ।
किमिदं ब्रह्मचर्य्यं ते मनसाऽब्रह्मचारिणः ॥२०॥
संसारे वर्त्तमानेन यदा चाप्सरसस्त्वया ।
प्राप्तास्त्यक्ताश्च शतशस्ताभ्यः किमिति ते स्पृहा ॥२१॥
तृप्तिर्नास्तीन्धनैरग्ने र्नाम्भसा लवणाम्भसः ।
नापि कामैरतृप्तस्य तस्मात् कामा न तृप्तये ॥२२॥
अतृप्तौ च कुतः शान्तिरशान्तौ च कुतः सुखम् ।
असुखे च कुतः प्रीतिरप्रीतौ च कुतो रतिः ॥२३॥
रिरंसा यदि ते तस्मादध्यात्मे धीयतां मनः ।
प्रशान्ता चानवद्या च नास्त्यध्यात्मसमा रतिः ॥२४॥
न तत्र कार्य्यं तूर्य्यैस्ते न स्त्रीभिर्न विभूषणैः ।
एकस्त्वं यत्र तत्रस्थस्तया रत्याभिरंस्यसे ॥२५॥
मानसं बलवद्दुःखं तर्षे तिष्ठति तिष्ठति ।
तं तर्षं छिन्धि दुःखं हि तृष्णा नास्ति च नास्ति च ॥२६॥
सम्पत्तौ वा विपत्तौ वा दिवा वा नक्तमेव वा ।
कामेषु हि सतृष्णस्य न शान्तिरुपपद्यते ॥२७॥
कामानां प्रार्थना दुःखा प्राप्तौ तृप्ति र्न विद्यते ।
वियोगान्नियतः शोको वियोगश्च ध्रुवो दिवि ॥२८॥
कृत्वापि दुष्करं कर्म्म स्वर्गं लब्ध्वापि दुर्लभम् ।
नृलोकं पुनरेवैति प्रवासात् स्वगृहं यथा ॥२९॥
यथा भ्रष्टस्य कुशलं शिष्टं किञ्चिन्न विद्यते ।
तिर्य्यक्षु पितृलोके वा नरके वोपपद्यते ॥४०॥

तस्य भुक्तवतः स्वर्गे विषयानुत्तमानपि ।
भ्रष्टस्यार्त्तस्य दुःखेन किमास्वादः करोति सः ॥४१॥

श्येनाय प्राणिवात्सल्यात् स्वमांसान्यपि दत्तवान् ।
शिबिः स्वर्गात् परिभ्रष्टस्तादृक् कृत्वापि दुष्करम् ॥४२॥

शक्रस्यार्द्धासनं गत्वा पूर्व्वपार्थिव एव यः ।
स देवत्वं गतः काले मान्धाताधः पुनर्ययौ ॥४३॥

राज्यं कृत्वापि देवानां पपात नहुषो भुवि ।
प्राप्तः किल भुजङ्गत्वं नाद्यापि परिमुच्यते ॥४४॥

तथैव दिविडो राजा राजवृत्तेन संस्कृतः ।
स्वर्गं गत्वा पुनर्भ्रष्टः कूर्म्मीभूतः किलार्णवे ॥४५॥

भूरिद्युम्नो ययातिश्च एते चान्ये नृपर्षभाः ।
कर्म्मभिर्द्यामभिक्रीय तत्क्षयात्पुनरत्यजत् ॥४६॥

असुराः पूर्व्वदेवास्तु सुरैरपहृतश्रियः ।
श्रियं समनुशोचन्तः पातालं शरणं ययुः ॥४७॥

किञ्च राजर्षिभिस्तावदसुरैर्वा सुरादिभिः ।
महेन्द्राः शतशः पेतुर्माहात्म्यमपि न स्थिरम् ॥४८॥

संसदं शोभयित्वैन्द्रीमुपेन्द्रश्चण्डविक्रमः ।
क्षीणकर्म्मा पपातोर्व्वीं मध्यादप्सरसां रसन् ॥४९॥

हा चैत्ररथ हा वापि हा मन्दाकिनि हा प्रिये ।
इत्यार्त्ता विलपन्तोपि गां पतन्ति दिवौकसः ॥५०॥

तीव्रं ह्युत्पद्यते दुःखं धीमतां[1] यन्मुमूर्षताम् ।

---

१ P. M. ह्रिमतावत् T.

किं पुनः पततां स्वर्गाद्देवान्तसुखसेविनाम् ॥५१॥

रजो गृह्णाति वासांसि म्लायन्ति परमा[ः]स्रजः ।
गात्रेभ्यो जायते स्वेदो रतिर्भवति नाशनी ॥५२॥
एतान्यादौ निमित्तानि च्युतौ स्वर्गाद्दिवौकसाम् ।
अनिष्टानीव मर्त्यानामरिष्टानि मुमूर्षताम् ॥५३॥
सुखमुत्पद्यते यच्च दिवि कामानुपाश्नताम् ।
त(य)च्च दुःखं निपततां दुःखमेवावशिष्यते ॥५४॥

तस्मादस्वन्तमत्राण(णा)मविश्वास्यमतर्पकम् ।
विज्ञाय क्षयिणं स्वर्गमपवर्गे मतिं कुरु ॥५५॥
अशरीरं भवाग्र्यं हि गत्वापि मुनिरुद्रकः ।
कर्म्मणोऽन्ते च्युतस्तस्मात् तिर्य्यग्योनिं प्रपत्स्यते ॥५६॥
मैत्रया सप्तवार्षिक्या ब्रह्मलोकमितो गतः ।
सुनेत्रः पुनरावृत्तो गर्भवासमुपेयिवान् ॥५७॥
यदा चैश्वर्य्यवन्तोपि क्षयिणः स्वर्गवासिनः ।
को नाम स्वर्गवासाय क्षिष्णवे स्पृहयेद्बुधः ॥५८॥

सूत्रेण बद्धोहि यथा विहङ्गो व्यावर्त्तते दूरगतोपि भूयः ।
अज्ञानसूत्रेण तथावबद्धो गतोपि दूरं पुनरेति लोकः ॥५९॥
कृत्वा[१] कालविलक्षणं प्रतिभुवा मुक्तो यथा बन्धनाद्
भुक्त्वा वेश्मसुखान्यतीत्य समयं भूयो विशेद् बन्धनम् ।
तद्वद् द्यां प्रतिभूवदात्मनियमै ध्यानादिभिः प्राप्तवान्
काले कर्म्मसु तेषु भुक्तविषयेष्वाकृष्यते गां पुनः ॥६०॥

---

१ P. M. कृत्वार्थं T.

अन्तर्जालगताः प्रमत्तमनसो मीनास्तडागे यथा
जानन्ति व्यसनं निरोधजनितं स्वस्थाश्चरन्त्यम्भसि ।
अन्तर्लोकगताः कृतार्थमतयस्तद्वद्दिवि ध्यायिनो
मन्यन्ते शिवमच्युतं ध्रुवमिति स्वं स्थानमावर्त्तकम् ॥६१॥

तज्जन्मव्याधिमृत्युव्यसनपरिगतं मत्वा जगदिदं
संसारे भ्राम्यमानं दिवि नृषु नरके तिर्य्यक्पितृषु च ।
यत्त्राणं निर्भयं यत् शिवममरमजरं निःशोकममृतम्
तद्धेतोर्ब्रह्मचर्य्यं चर जहिहि चलं स्वर्गं प्रति रुचिम् ॥६२॥

इति सौन्दरनन्दे महाकाव्ये स्वर्गापवादो नाम
एकादशः सर्गः ॥

---

# द्वादशः सर्गः

अप्सरोभृतको धर्म्मञ्चरसीत्यथ चोदितः ।
आनन्देन तदा नन्दः परं व्रीडमुपागमत् ॥१॥

तस्य व्रीडेन महता प्रमोदो हृदि नाभवत् ।
अप्रामोद्येन विमुखं नावतस्थे व्रते मनः ॥२॥

कामरागप्रधानोऽपि परिहाससमोऽपि सन् ।
परिपाकगते हेतौ न स तन्ममृषे वचः ॥३॥

अपरीक्षकभावाच्च पूर्व्वं मत्वा दिवं ध्रुवम् ।
तस्मात् क्षिष्णुं परिश्रुत्य भृशं संवेगमीयिवान् ॥४॥

तस्य स्वर्गात् निववृते सङ्कल्पाश्वो मनोरथः ।
महारथ इवोन्मार्गादप्रमत्तस्य सारथेः ॥५॥

स्वर्गतर्षान्निवृत्तस्य सद्यः स्वस्थ इवाभवत् ।
मृष्टादपथ्याद्विरतो जिजीविषुरिवातुरः ॥६॥

विसस्मार प्रियां भार्य्यामप्सरोदर्शनाद् यथा ।
तथा नित्यतयोद्विग्नस्तत्याजाप्सरसोऽपि सः ॥७॥

महतामपि भूतानामावृत्तिरिति चिन्तयन् ।
संवेगाच्च सरागोऽपि वीतराग इवाभवत् ॥८॥

बभूव स हि संवेगः श्रेयसस्तस्य वृद्धये ।
[1]धातोरधिरिवाख्याते पठितोऽक्षरचिन्तकैः ॥९॥

---

[1] P. L. M. धातु ।

न तु कामात्मनस्तस्य केनचित् जगृहे धृतिः ।
त्रिषु कालेषु सर्व्वेषु निपातोऽस्तिरिव स्मृतः ॥१०॥
खेलगामी महाबाहुर्गजेन्द्र इव निर्म्मदः ।
सोऽभ्यगच्छद् गुरुं काले विवक्षुर्भावमात्मनः ॥११॥
प्रणम्य च गुरौ मूर्ध्ना बाष्पव्याकुललोचनः ।
कृत्वाञ्जलिमुवाचेदं ह्रिया किञ्चिदवाङ्मुखः ॥१२॥
अप्सरःप्राप्तये यन्मे भगवन् प्रतिभूरसि ।
नाप्सरोभि र्ममार्थोऽस्ति प्रतिभूत्वं त्यजाम्यहम् ॥१३॥
श्रुत्वा ह्यावर्त्तकं स्वर्गं संसारस्य च चित्रताम् ।
न मर्त्त्येषु न देवेषु प्रवृत्तिर्म्मम रोचते ॥१४॥
यदि प्राप्य दिवं यत्नान्नियमेन दमेन च ।
अवितृप्ताः पतन्त्यन्ते स्वर्गाय त्यागिने नमः ॥१५॥
अतश्च निखिलं लोकं विदित्वा सचराचरम् ।
सर्व्वदुःखक्षयकरे त्वद्धर्म्मे परमे रमे ॥१६॥
तस्माद् व्याससमासाभ्यां तन्मे व्याख्यातुमर्हसि ।
यच्छ्रुत्वा शृण्वताम् श्रेष्ठ परमं प्राप्नुयां पदम् ॥१७॥
ततस्तस्याशयं ज्ञात्वा विपक्षाणीन्द्रियाणि च ।
श्रेयश्चैवामुखीभूतं निजगाद तथागतः ॥१८॥
अहो प्रत्यवमर्शोऽयं श्रेयसस्ते पुरोजवः ।
अरण्यां मथ्यमानायामग्नेर्धूम इवोत्थितः ॥१९॥
चिरमुन्मार्गविहृतो लोलैरिन्द्रियवाजिभिः ।
अवतीर्णोऽसि पन्थानं दिष्ट्या दृष्ट्याऽविमूढया ॥२०॥

अद्य ते सफलं जन्म लाभोऽद्य सुमहांस्तव ।
यस्य कामरसज्ञस्य नैष्कर्म्यायोत्सुकं मनः ॥२१॥
लोकेऽस्मिन्नालयारामे निवृत्तौ दुर्लभा रतिः ।
व्यथन्ते ह्यपुनर्भावात् प्रपातादिव बालिशाः ॥२२॥
दुःखं न स्यात् सुखं मे स्यादिति प्रयतते जनः ।
अत्यन्तदुःखोपरमं सुखं तच्च न बुध्यते ॥२३॥
अरिभूतेष्वनित्येषु सततं दुःखहेतुषु ।
कामादिषु जगत् सक्तं न वेत्ति सुखमव्ययम् ॥२४॥
सर्व्वदुःखापहं तत्तु हस्तस्थममृतं तव ।
विषं पीत्वा यदगदं समये पातुमिच्छसि ॥२५॥
अनर्हसंसारभयं मानार्हं ते चिकीर्षितम् ।
रागाग्निस्तादृशो यस्य धर्म्मोन्मुखपराङ्मुखः ॥२६॥
रागोद्दामेन मनसा सर्व्वथा दुष्कराधृतिः ।
सदोषं सलिलं दृष्ट्वा पथिकेन पिपासुना ॥२७॥
ईदृशी नाम बुद्धिस्ते निरुद्धा रजसाऽभवत् ।
रजसा चण्डवातेन विवस्वत इव प्रभा ॥२८॥
सा जिघांसुस्तमो हार्द्दं या संप्रति विजृम्भते ।
तमो नैशं प्रभा सौरी विनिर्गीर्णेव मेरुणा ॥२९॥
युक्तरूपमिदञ्चैव शुद्धसत्वस्य चेतसः ।
यत्ते स्यान्नैष्ठिके सूक्ष्मे श्रेयसि श्रद्दधानता ॥३०॥
धर्म्मच्छन्दमिमं तस्माद् विवर्द्धयितुमर्हसि ।
सर्व्वधर्म्मा हि धर्म्मज्ञ नियमाच्छन्दहेतवः ॥३१॥

सत्यां गमनबुद्धौ हि गमनाय प्रवर्त्तते ।
शय्याबुद्धौ च शयनं स्थानबुद्धौ तथा स्थितिः ॥२२॥
अन्तर्भूमिगतं ह्यम्भः श्रद्दधाति नरो यदा ।
अर्थित्वे सति यत्नेन तदा खनति गामिमाम् ॥२३॥
नार्थी यद्यग्निना वा स्यात् श्रद्दध्यात्तु न वारणौ ।
मथ्नीयान्नारणिं कश्चित् तद्भावे सति मथ्यते ॥२४॥
सस्योत्पत्तिं यदि न वा श्रद्दध्यात् कर्षकः क्षितौ ।
अर्थी सस्येन वा न स्याद् बीजानि न वपेद्भुवि ॥२५॥
अतश्च हस्त इत्युक्ता मया श्रद्धा विशेषतः ।
यस्माद् गृह्णाति सद्धर्म्मं दायं हस्त इवाक्षतः ॥२६॥
प्राधान्यादिन्द्रियमिति स्थिरत्वाद् बलमित्यतः ।
गुणदारिद्र्यशमनाद् धनमित्यभिवर्णिता ॥२७॥
रक्षणार्थेन धर्म्मस्य तथेषीके[१]त्युदाहृता ।
लोकेऽस्मिन् दुर्लभत्वाच्च रत्नमित्यभिभाषिता ॥२८॥
पुनश्च बीजमित्युक्ता निमित्तं श्रेयसो यदा ।
पावनार्थेन पापस्य नदीत्यभिहिता पुनः ॥२९॥
यस्माद्धर्म्मस्य चोत्पत्तौ श्रद्धा कारणमुत्तमम् ।
मयोक्ता कार्य्यतस्तस्मात् तत्र तत्र तथा तथा ॥४०॥
श्रद्धाङ्कुरमिमं तस्मात् संवर्द्धयितुमर्हसि ।
तद्वृद्धौ वर्द्धते धर्म्मो मूलवृद्धौ यथा द्रुमः ॥४१॥

---

१ P. M. ०चीके० ।

व्याकुलं दर्शनं यस्य दुर्बलो यस्य निश्चयः ।
तस्य पारिप्लवा श्रद्धा न हि कृत्याय वर्त्तते ॥४२॥

यावत्तत्त्वं न भवति हि दृष्टं श्रुतं वा
तावच्छ्रद्धा न भवति बलस्था स्थिरा वा ।
दृष्टे तत्त्वे नियमपरिभूतेन्द्रियस्य
श्रद्धावृक्षो भवति सफलश्चाश्रयश्च ॥

इति सौन्दरनन्दे महाकाव्ये प्रत्यवमर्शो नाम
द्वादशः सर्गः ॥

---

## त्रयोदशः सर्गः

अथ संराधितो नन्दः श्रद्धां प्रति महर्षिणा ।
परिषिक्तोऽमृतेनेव युयुजे परया मुदा ॥१॥

कृतार्थमिव तम् मेने संबुद्धः श्रद्धया तया ।
मेने प्राप्तमिव श्रेयः स च बुद्धेन संस्कृतः ॥२॥

श्लक्ष्णेन वचसा कांश्चित् कांश्चित् परुषया गिरा ।
कांश्चिदाभ्यामुपायाभ्यां स विनिन्ये विनायकः ॥३॥

पांशुभ्यः काञ्चनं जातं विशुद्धं निर्म्मलं शुचि ।
स्थितं पांशुष्वपि यथा पांशुदोषै र्न लिप्यते ॥४॥

पद्मपर्णं यथा चैव जले जातं जले स्थितम् ।
उपरिष्टादधस्ताद् वा न जलेनोपलिप्यते ॥५॥

तद्वल्लोके मुनिर्जातो लोकस्यानुग्रहं चरन् ।
कृतित्वान्निर्म्मलत्वाच्च लोकधर्म्मै र्न लिप्यते ॥६॥

श्लेषं त्यागं प्रियं रूक्षं कथाञ्च ध्यानमेव च ।
मन्त्रकाले चिकित्सार्थं चक्रे नात्मानुवृत्तये ॥७॥

अतश्च सन्दधे कायं महाकरुणया तया ।
मोचयेयं कथं दुःखात् सत्वानीत्यनुकम्पकः ॥८॥

अथ संहर्षणान्नन्दं विदित्वा भाजनीकृतम् ।
अब्रवीद् ब्रुवतां श्रेष्ठः क्रमज्ञः श्रेयसां क्रमम् ॥९॥

अतः प्रभृति भूयस्त्वं श्रद्धेन्द्रियपुरःसरः ।
अमृतस्याप्तये सौम्य वृत्तं रक्षितुमर्हसि ॥१०॥

प्रयोगः कायवचसोः शुद्धो भवति ते यथा ।
उत्तानो विवृतो गुप्तोऽनवच्छिद्रस्तथा कुरु ॥११॥
उत्तानो भावकरणात् विवृतश्चाप्यगूहनात् ।
गुप्तो रक्षणतात्पर्य्यादच्छिद्रश्चानवद्यतः ॥१२॥
श[री]रवचसोः शुद्धौ सप्ताङ्गे चापि कर्म्मणि ।
आजीवसमुदाचारं शौचात् संस्कर्त्तुमर्हसि ॥१३॥
दोषाणां कुहनादीनां पञ्चानामनिषेवणात् ।
त्यागाच्च ज्योतिषादीनां चतुर्णां वृत्तिघातिनाम् ॥१४॥
प्राणिधान्यधनादीनां वर्ज्यानामप्रतिग्रहात् ।
भैक्ष्याङ्गानां निसृष्टानां नियतानां प्रतिग्रहात् ॥१५॥
परितुष्टः शुचिर्मञ्जुश्चौक्षया जीवसम्पदा ।
कुर्य्याद्दुःखप्रतीकारं यावदेव विमुक्तये ॥१६॥
कर्म्मणो हि यथा दृष्टात् कायवाक्प्रभवादपि ।
आजीवः पृथगेवोक्तो दुःशोधत्वादयं मया ॥१७॥
गृहस्थेन हि दुःशोधा दृष्टि र्विविधदृष्टिना ।
आजीवो भिक्षुणा चैव परेष्वायत्तवृत्तिना ॥१८॥
एतावच्छीलमित्युक्तमाचारोयं समासतः ।
अस्य नाशेन नैव स्यात् प्रव्रज्या न गृह स्थिता ॥१९॥
तस्माच्चारित्रसम्पन्नो ब्रह्मचर्य्यमिदं चर ।
अणुमात्रेष्ववद्येषु भयदर्शी दृढव्रतः ॥२०॥
शीलमास्थाय वर्त्तन्ते सर्व्वा हि श्रेयसि क्रियाः ।
स्थानाद्यानीव कार्य्याणि प्रतिष्ठाय वसुन्धराम् ॥२१॥

मोक्षस्योपनिषत् सौम्य वैराग्यमिति गृह्यताम् ।
वैराग्यस्यापि संवेगः संविदो ज्ञानदर्शनम् ॥२२॥
ज्ञानस्योपनिषच्चैव समाधिरुपधार्य्यताम् ।
समाधेरप्युपनिषत् सुखं शारीरमानसम् ॥२३॥
प्रश्रब्धिः कायमनसः सुखस्योपनिषत्परा ।
प्रश्रब्धेरप्युपनिषत् प्रीतिरप्यवगम्यताम् ॥२४॥
तथा प्रीतेरुपनिषत् प्रामोद्यं परमं मतम् ।
प्रामोद्यस्याप्यहृल्लेखः कुकृतेष्वकृतेषु वा ॥२५॥
अविलेखस्य मनसः शीलन्तूपनिषच्छुचि ।
अतः शीलं नयत्यग्र्यमिति शीलं विशोधय ॥२६॥
शीलनात् शीलमित्युक्तं शीलनात् सेवनादपि ।
सेवनात्तन्निदेशाच्च निर्देशश्च तदाश्रयात् ॥२७॥
शीलं हि शरणं सौम्य कान्तार इव दैशिकः ।
मित्रं बन्धुश्च रक्षा च धनञ्च बलमेव च ॥२८॥
यतः शीलमतः सौम्य शीलं संस्कर्त्तुमर्हसि ।
एतत् स्थानमथान्ये च मोक्षारम्भेषु योगिनाम् ॥२९॥
ततः स्मृतिमधिष्ठाय चपलानि स्वभावतः ।
इन्द्रियाणीन्द्रियार्थेभ्यो निवारयितुमर्हसि ॥३०॥
भेतव्यं न तथा शत्रो र्नाग्ने र्नाहेर्नचाशनेः ।
इन्द्रियेभ्यो यथा स्वेभ्यस्तैरजस्रं हि हन्यते ॥३१॥
द्विषद्भिः शत्रुभिः कश्चित् कदाचित् पीड्यते न वा ।
इन्द्रियैर्बाध्यते सर्व्वः सर्व्वत्र च सदैव च ॥३२॥

न च प्रयाति नरकं शत्रुप्रभृतिभिर्हतः ।
कृष्यते तत्र निघ्नस्तु चपलैरिन्द्रियैर्हतः ॥२३॥
हन्यमानस्य तैर्दुःखं हार्द्दं भवति वा न वा ।
इन्द्रियैर्बाध्यमानस्य हार्द्दं शारीरमेव च ॥२४॥
सङ्कल्पविषदिग्धा हि पञ्चेन्द्रियमया[ः] शराः ।
चिन्तापुङ्खा रतिफला विषयाकाशगोचराः ॥२५॥
मनुष्यहरिणान् घ्नन्ति कामव्याधेरिता हृदि ।
विहन्यन्ते यदि न ते ततः पतन्ति तैः क्षत[ाः] ॥२६॥
नियमाजिरसंस्थेन धैर्य्यकार्म्मुकधारिणा ।
निपतन्तो निवार्य्यास्ते महता स्मृतिवर्म्मणा ॥२७॥
इन्द्रियाणामुपशमादरीणां निग्रहादिव ।
सुखं स्वपिति वास्ते वा यत्र तत्र गतोद्भवः ॥२८॥
तेषां हि सततं लोके विषयानभिकाङ्क्षताम् ।
संविन्नैवास्ति कार्पण्याच्छुनामाशावतामिव ॥२९॥
विषयैरिन्द्रियग्रामो न तृप्तिमधिगच्छति ।
अजस्रं पूर्य्यमाणोऽपि समुद्रः सलिलैरिव ॥४०॥
अवश्यं गोचरै[ः] स्वै[ः] स्वैर्वर्त्तितव्यमिहेन्द्रियैः ।
निमित्तं तत्र न ग्राह्यमनुव्यञ्जनमेव च ॥४१॥
आलोक्य चक्षुषा रूपं धातुमात्रे व्यवस्थितः ।
स्त्री वेति पुरुषो वेति न कल्पयितुमर्हसि ॥४२॥
स चेत् स्त्रीपुरुषग्राहः क्वचिद् विद्येत कश्चन ।
शुभतः केशदन्तादीन् नानुप्रस्थातुमर्हसि ॥४३॥

नापनेयं ततः किञ्चित् प्रक्षेप्यं नापि किञ्चन ।
द्रष्टव्यं भूततो भूतं यादृशञ्च यथा च यत् ॥४४॥

एवं ते पश्यतस्तत्त्वं शश्वदिन्द्रियगोचरे ।
भविष्यति पदस्थानं नाभिध्यादौर्म्मनस्ययोः ॥४५॥

अभिध्या प्रियरूपेण हन्ति कामात्मकं जगत् ।
अरिर्मित्रमुखेनेव प्रियवाक् कलुषाशयः ॥४६॥

दौर्मनस्याभिधानस्तु प्रतिघो विषयाश्रितः ।
मोहाद् येनानुवृत्तेन परत्रेह च हन्यते ॥४७॥

अनुरोधविरोधाभ्यां शीतोष्णाभ्यामिवार्द्दितः ।
शर्म्म नाप्नोति न श्रेयश्चलेन्द्रियमतो जगत् ॥४८॥

नेन्द्रियं विषये तावत् प्रवृत्तमपि सज्जते ।
यावन्न मनसस्तत्र परिकल्पः प्रवर्त्तते ॥४९॥

इन्धने सति वायौ च यथा ज्वलति पावकः ।
विषयात् परिकल्पाच्च क्लेशाग्निर्जायते तथा ॥५०॥

अभूतपरिकल्पेन विषयस्य हि बध्यते ।
तमेव विषयं पश्यन् भूततः परिमुच्यते ॥५१॥

दृष्ट्वैकं रूपमन्यो हि रज्यतेऽन्यः प्रदुष्यति ।
कश्चिद् भवति मध्यस्थस्तत्रैवान्यो घृणायते ॥५२॥

अतो न वि[ष]यो हेतु र्बन्धाय न विमुक्तये ।
परिकल्पविशेषेण सङ्गो[१] भवति वा न वा ॥५३॥

---

१ P. M. संयोग T.

कार्य्यः परमयत्नेन तस्मादिन्द्रियसंवरः ।
इन्द्रियाणि ह्यगुप्तानि दुःखाय च भवाय च ॥५४॥

कामभोगभोगवद्भिरात्मदृष्टिदृष्टिभिः
प्रमादनैकमूर्द्धभिः प्रहर्षलोलजिह्वकैः ।
इन्द्रियोरगैर्मनोविलाश्रयैः स्पृहाविषैः
शमागदादृते न[द]ष्टमस्ति यच्चिकित्सयेत्[1] ॥५५॥

तस्मादेषामकुशलकराणामरीणां
चक्षुर्घ्राणश्रवणरसनस्पर्शनानाम् ।
सर्व्वावस्थं भवति नियमादप्रमत्तो
मास्मिन्नर्थे क्षणमपि कृथास्त्वं प्रमादम् ॥५६॥

सौन्दरनन्दे महाकाव्ये शीलेन्द्रियजयो नाम
त्रयोदशः सर्गः ।

---

१ P. M. शमागतादृते नष्टमस्ति यश्चिकित्सेत् T.

## चतुर्दशः सर्गः

अथ स्मृतिकपाटेन पिधायेन्द्रियसंवरम् ।
भोजने भव म[ा]त्र[ा]ज्ञो ध्यानायानामयाय च ॥१॥

प्राणापानौ निगृह्णाति ग्लानिनिद्रे प्रयच्छति ।
कृतो ह्यत्यर्थमाहारो विहन्ति च पराक्रमम् ॥२॥

यथा चात्यर्थमाहा[र]ः कृतोऽनर्थाय कल्पते ।
उपयुक्तस्तथात्यल्पो न सामर्थ्याय कल्पते ॥३॥

आचयं द्युतिमुत्साहं प्रयोगं बलमेव च ।
भोजनं कृतमत्यल्पं शरीरस्यापकर्षति ॥४॥

यथा भारेण नमते लघुनोन्नमते तुला ।
समा तिष्ठति युक्तेन भोज्येनेयं तथा तनुः ॥५॥

तस्मादभ्यवहर्त्तव्यं स्वशक्तिमनुपश्यता ।
नातिमात्रं न चात्यल्पं मेयं मानवशादपि ॥६॥

अभ्याक्रान्तो हि कायाग्नि र्गुरुणान्नेन शाम्यति ।
अवच्छन्न इवाल्पोऽग्निः सहसा महतेन्धसा ॥७॥

अत्यन्तमपि संहारो नाहारस्य प्रशस्यते ।
अनाहारो हि निर्व्वाति निरिन्धन इवानलः ॥८॥

यस्मान्नास्ति विनाहारात् सर्व्वप्राणभृतां स्थितिः ।
तस्माद्दुष्यति नाहारो विकल्पोऽत्र तु वार्य्यते ॥९॥

न ह्येकविषयेऽन्यत्र सज्यन्ते प्राणिनस्तथा ।
अविज्ञाते यथाहारे बोद्धव्यं तत्र कारणम् ॥१०॥

चिकित्सार्थं यथा धत्ते व्रणस्यालेपनं व्रणी ।
क्षुद्विघातार्थमाहारस्तद्वत् सेव्यो मुमुक्षुणा ॥ १ १॥
भारस्योद्वहनार्थञ्च रथाक्षोऽभ्युह्यते यथा ।
भोजनं प्राणयात्रार्थं तद्वद्विद्वान्निषेवते ॥ १ २॥
समभिक्रमणार्थञ्च कान्तारस्य यथाध्वगौ ।
पुत्रमांसानि खादेतां दम्पती भृशदुःखितौ ॥ १ ३॥
एवमभ्यवहर्त्तव्यं भोजनं प्रतिसंख्यया ।
न भूषार्थं न वपुषे न मदाय न दृप्तये ॥ १ ४॥
धारणार्थं शरीरस्य भोजनं हि विधीयते ।
उपस्तम्भः पिपतिषो दुर्ब्बलस्येव वेश्मनः ॥ १ ५॥
प्लवं यत्नात् यथा कश्चिद् बध्नीयाद् धारयेदपि ।
न तत्स्नेहेन यावत्तु महौघस्योत्तितीर्षया ॥ १ ६॥
तथोपकरणैः कायं धारयन्ति परीक्षकाः ।
न तत्स्नेहेन यावत्तु दुःखौघस्य तितीर्षया ॥ १ ७॥
शोचता पीड्यमानेन दीयते शत्रवे यथा ।
न भक्त्या नापि तर्षेण केवलं प्राणगुप्तये ॥ १ ८॥
योगाचारस्तथाहारं शरीराय प्रयच्छति ।
केवलं क्षुद्विघातार्थं न रागेण न भक्तये ॥ १ ९॥
मनोधारणया चैव परिणाम्यात्मवानहः ।
विधूय निद्रां योगेन निशामप्यतिनामयेत् ॥ २ ०॥
हृदि यत् संज्ञिनश्चैव निद्रा प्रादुर्भवेत्तव ।
गुणवत्संज्ञितां संज्ञां तदा मनसि मा कृथाः ॥ २ १॥

धातुरारम्भधृत्योश्च स्थामविक्रमयोरपि ।
नित्यं मनसि कार्य्यस्ते बाध्यमानेन निद्रया ॥२२॥

आम्नातव्याश्च विशदं ते धर्म्मा ये परिश्रुताः ।
परेभ्यश्चोपदेष्टव्याः सञ्चिन्त्याः स्वयमेव च ॥२३॥

प्रक्लेद्यमद्भिर्वदनं विलोक्याः सर्व्वतो दिशः ।
चार्य्या दृष्टिश्च तारासु जिजागरिषुणा सदा ॥२४॥

अन्तर्गतैरचपलै र्वशस्थायिभिरिन्द्रियैः ।
अविक्षिप्तेन मनसा चंक्रम्यस्वास्व वा निशि ॥२५॥

भये प्रीतौ च शोके च निद्रया नाभिभूयते ।
तस्मान्निद्राभियोगेषु सेवितव्यमिदं त्रयम् ॥२६॥

भयमागमनान्मृत्योः प्रीतिं धर्म्मपरिग्रहात् ।
जन्मदुःखादपर्य्यन्तात् शोकमागन्तुमर्हसि ॥२७॥

एवमादिः क्रमः सौम्य कार्य्यो जागरणं प्रति ।
वन्ध्यं हि शयनादायुः कः प्राज्ञः कर्त्तुमर्हति ॥२८॥

दोषव्यालानतिक्रम्य व्यालान् गृहगतानिव ।
क्षमं प्राज्ञस्य न स्वप्तुं निस्तितीर्षोर्महद्भयम् ॥२९॥

प्रदीप्ते जीवलोके हि मृत्युव्याधिजराग्निभिः ।
कः शयीत निरुद्वेगः प्रदीप्त इव वेश्मनि ॥३०॥

तस्मात् तम इति ज्ञात्वा निद्रां नावेष्टुमर्हसि ।
अप्रशान्तेषु दोषेषु सशस्त्रेष्विव शत्रुषु ॥३१॥

पूर्व्वयामं त्रियामायाः प्रयोगेनातिनाम्यतु ।
सेव्या शय्या शरीरस्य विश्रामार्थमतन्द्रिणा ॥३२॥

दक्षिणेन तु पार्श्वेन स्थितया लोकसंज्ञया ।
प्रबोधं हृदयं कृत्वा शयीथाः शान्तिमानसः ॥२३॥
यामे तृतीये चोत्थाय चरन्नासीन एव वा ।
भूयो योगं मनःशुद्धौ कुर्व्वीथा नियतेन्द्रियः ॥२४॥

अथासनगत[ा]स्था न प्रेक्षितव्या हृतादिषु ।
सम्प्रजानन् क्रियाः सर्व्वाः स्मृतिमाधातुमर्हसि ॥२५॥
द्वाराध्यक्ष इव द्वारि यस्य प्रणिहिता स्मृतिः ।
धर्षयन्ति न तं दोषाः पुरं गुप्तमिवारयः ॥२६॥
न तस्योत्पद्यते क्लेशो यस्य कायगता स्मृतिः ।
चित्तं सर्व्वास्ववस्थासु बालं धात्रीव रक्षति ॥२७॥
शरव्यः स तु दोषाणां यो हीनः स्मृतिवर्म्मणा ।
रणस्थः प्रतिशत्रूणां विहीन इव वर्म्मणा ॥२८॥
अनाथं तन्मनो ज्ञेयं यत् स्मृतिर्नाभिरक्षति ।
निर्णेता दृष्टिरहितो विषयेषु चरन्निव ॥२९॥
अनर्थेषु प्रसक्ताश्च स्वार्थेभ्यश्च पराङ्मुखाः ।
यद्भये सति नोद्विग्नाः स्मृतिनाशोऽत्र कारणम् ॥४०॥
स्वभूमिषु गुणाः सर्व्वे ये च शीलादयः स्थिताः ।
विकीर्णा इव गा गोपः स्मृतिस्ताननुगच्छति ॥४१॥
प्रनष्टममृतम् तस्य यस्य विप्रसृता स्मृतिः ।
हस्तस्थममृतं तस्य यस्य कायगता स्मृतिः ॥४२॥
आर्य्यो न्यायः कुतस्तस्य स्मृतिर्यस्य न विद्यते ।
यस्यार्य्यो नास्ति च न्यायः प्रनष्टस्तस्य सतपथः ॥४३॥

प्रनष्टो यस्य सन्मार्गो नष्टं तस्यामृतं पदम् ।
प्रनष्टममृतम् यस्य स दुःखान्न विमुच्यते ॥४४॥

तस्माच्चरन् चरोऽस्मीति स्थितोस्मीति च तिष्ठतः ।
एवमादिषु कालेषु स्मृतिमाधातुमर्हसि ॥४५॥

योगानुलोमं विजनं[1] विशब्दं
शय्यासनं सौम्य तथा भजस्व ।
कायस्य कृत्वा हि विवेकमादौ
सुखोऽधिगन्तुं मनसो विवेकः ॥४६॥

अलब्धचेतःप्रशमः सरागो
यो न प्रचारं भजते विविक्तम् ।
स क्षण्यते ह्यप्रतिलब्धमार्गः
चरन्निवोर्व्यां बहुकण्टकायाम् ॥४७॥

अदृष्टतत्वेन परीक्षकेण
स्थितेन चित्रे विषयप्रचारे ।
चित्तं निषेद्धुं न सुखेन शक्यं
कृष्टोदका गौरिव सस्यमध्यात् ॥४८॥

अनीर्य्यमाणस्तु यथानिलेन
प्रशान्तिमागच्छति चित्रभानुः ।
अल्पेन यत्नेन तथा विविक्ते-
ष्वघट्टितं शान्तिमुपैति चेतः ॥४९॥

---

१ P. M. विजलं ।

क्वचिद्भुक्त्वा यत्तद्वसनमपि यत्तत्परिहितो
वसन्नात्मारामः क्वचन विजने योऽभिरमते ।
कृतार्थः स ज्ञेयः शमसुखरसज्ञः कृतमतिः
परेभ्यः संसर्गं परिहरति यः कण्टकमिव ॥५०॥

यदि द्वन्द्वारामे जगति विषयव्यग्रहृदये
विविक्ते निर्द्वन्द्वो विहरति कृती शान्तहृदयः ।
ततः पीत्वा प्रज्ञारसममृतवत् तृप्तहृदयो
विविक्तः संसक्तं विषयकृपणं शोचति जगत् ॥५१॥

वसन् शून्यागारे यदि सततमेकोऽभिरमते
यदि क्लेशोत्पादैः सह न रमते शत्रुभिरिव ।
चरन्नात्मारामो यदि च पिबति प्रीतिसलिलं
ततो भुङ्क्ते श्रेष्ठं त्रिदशपतिराज्यादपि सुखम् ॥५२॥

सौन्दरनन्दे महाकाव्ये आदिप्रस्थानो नाम
चतुर्द्दशः सर्गः ।

## पञ्चदशः सर्गः

यत्र तत्र विविक्ते तु[1] बद्धा पर्य्यङ्कमुत्तमम् ।
ऋजुं कायं समाधाय स्मृत्याभिमुखयान्वितः ॥१॥

नासाग्रे वा ललाटे वा भ्रुवोरन्तर एव वा ।
कुर्व्वीथाश्चपलं चित्तमालम्बनपरायणम् ॥२॥

स चेत् कामवितर्कस्त्वां धर्षयेन्मानसो ज्वरः ।
क्षेप्तव्यो नाधिवास्यः स वस्त्रे रेणुरिवागतः ॥३॥

यद्यपि प्रतिसंख्यानात् कामानुत्सृष्टवानसि ।
तमांसीव प्रकाशेन प्रतिपक्षेण तान् जहि ॥४॥

तिष्ठत्यनुशयस्तेषां छन्नोऽग्निरिव भस्मना ।
स ते भावनया सौम्य प्रशाम्योऽग्निरिवाम्बुना ॥५॥

ते हि तस्मात् प्रवर्त्तन्ते भूयो बीजादिवाङ्कुराः ।
तस्य नाशेन ते न स्युः बीजनाशादिवाङ्कुराः ॥६॥

अर्ज्जनादीनि कामेभ्यो दृष्ट्वा दुःखानि कामिनाम् ।
तस्मात् तान् मूलतश्छिन्धि मित्रसंज्ञानरीनिव ॥७॥

अनित्या मोषधर्म्माणो रिक्ता व्यसनहेतवः ।
बहुसाधारणाः कामाः वर्ज्या ह्याशीविषा इव ॥८॥

ये मृग्यमाणा दुःखाय रक्ष्यमाणा न शान्तये ।
भ्रष्टाः शोकाय महते प्राप्ताश्च न वितृप्तये ॥९॥

तृप्तिं वित्तप्रकर्षेण स्वर्गावाप्त्या कृतार्थताम् ।
कामेभ्यश्च सुखोत्पत्तिं यः पश्यति स नश्यति ॥१०॥

---

१ P. M. च ।

चलानपरिनिष्पन्नानसारानवस्थितान् ।
परिकल्पसुखान् कामान् न तान् स्मर्त्तुमिहार्हसि ॥११॥

व्यापादो वा विहिंसा वा क्षोभयेद् यदि ते मनः ।
प्रसाद्यं तद् विपक्षेण मणिनेवाकुलं जलम् ॥१२॥

प्रतिपक्षस्तयोर्ज्ञेयो मैत्री कारुण्यमेव च ।
विरोधो हि तयोर्नित्यं प्रकाशतमसोरिव ॥१३॥

निवृत्तं यस्य दौःशील्यं व्यापादश्च प्रवर्त्तते ।
हन्ति पांशुभिरात्मानं सुस्नात इव वारणः ॥१४॥

दुःखितेभ्यो हि मर्त्त्येभ्यो व्याधिमृत्युजरादिभिः ।
आर्य्यः को दुःखमपरं सघृणो धातुमर्हति ॥१५॥

दुष्टेन चेह मनसा बाध्यते वा परो न वा ।
सद्यस्तु दह्यते तावत् स्वंमनो दुष्टचेतसः ॥१६॥

तस्मात् सर्व्वेषु भूतेषु मैत्री कारुण्यमेव च ।
न व्यापादं विहिंसां वा विकल्पयितुमर्हसि ॥१७॥

यद्यदेव प्रसक्तं हि वितर्कयति[1] मानवः ।
अभ्यासात् तेन तेनास्य [2]रतिर्भवति चेतसः ॥१८॥

तस्मादकुशलं त्यक्त्वा कुशलं ध्यातुमर्हसि ।
यत्ते स्यादिह चार्थाय परमार्थस्य चाप्तये ॥१९॥

संवर्धन्ते ह्यकुशला वितर्काः सम्भृता हृदि ।
अनर्थजनकास्तुल्यमात्मनश्च परस्य च ॥२०॥

---

१ P. M. विवर्ज्जयति । २ P. M. नति० T.

श्रेयसो विघ्नकरणात् भवन्त्यात्मविपत्तये ।
पात्रीभावोपघातं तु परभक्तिविपत्तये ॥२१॥

मनः कर्म्मसु विक्षेप्थमपि वा वक्तुमर्हसि[1] ।
[2]नत्वेवाकुशलं सौम्य वितर्कयितुमर्हसि ॥२२॥

या त्रिकामोपभोगाय चिन्ता म[न]सि वर्त्तते ।
न च तं गुणमाप्नोति बन्धनाय च कल्पते ॥२३॥

सत्वानामुपघाताय परिक्लेशाय वा मनः ।
मोहं व्रजति कालुष्यं नरकाय च वर्त्तते ॥२४॥

तद्वितर्कैरकुशलैर्नात्मानं हन्तुमर्हसि ।
सुशस्त्रं रत्नविकृतं मृद्धतोर्गाः खनन्निव ॥२५॥

अनभिज्ञो यथा जात्यं दहेदगुरुकाष्ठवत् ।
अन्यायेन मनुष्यत्वमुपहन्यादिदं तथा ॥२६॥

त्यक्त्वा रत्नं यथा लोष्टं रत्नद्वीपाच्च संहरेत् ।
त्यक्त्वा नैःश्रेयसं धर्म्मं चिन्तयेदशुभं तथा ॥२७॥

हिमवन्तं यथा गत्वा विषं भुञ्जीत नौषधम् ।
मनुष्यत्वं तथा प्राप्य पापं सेवेत नो शुभम् ॥२८॥

तद्बुद्ध्वा प्रतिपक्षेण वितर्कं क्षेप्तुमर्हसि ।
सूक्ष्मेण प्रतिकीलेन कीलं दार्व्वन्तरादिव ॥२९॥

वृद्ध्यवृद्ध्योरथ भवेच्चिन्ता ज्ञातिजनं प्रति ।
स्वभावो जीवलोकस्य परीक्ष्यस्तन्निवृत्तये ॥३०॥

---

१ P. M. वाग्वक्तुमर्हसि T.  २ P. M. नत्वेक० T.

संसारे कृष्यमाणानां सत्वानां स्वेन कर्म्मणा ।
को जनः सुजनः को वा मोहात्सको जने जनः ॥२१॥
अतीतेऽध्वनि संवृत्तः स्वजनो हि जनस्तव ।
अप्राप्ते चाध्वनि जनः स्वजनस्ते भविष्यति ॥२२॥
विहगानां यथा सायं तत्र तत्र समागमः ।
जातौ जातौ तथाश्लेषो जनस्य स्वजनस्य च ॥२३॥
प्रतिश्रयं बहुविधं संश्रयन्ति यथाध्वगाः ।
प्रतियान्ति पुनस्त्यक्त्वा तद्वत् ज्ञातिसमागमः ॥२४॥
लोके प्रकृतिभिन्नेऽस्मिन् न कश्चित् कस्यचित् प्रियः ।
कार्य्यकारणसंबद्धं बालुकामुष्टिवज्जगत् ॥२५॥
बिभर्त्ति हि सुतं माता धारयिष्यति मामिति ।
मातरं भजते पुत्रो गर्भेणाधत्त मामिति ॥२६॥
अनुकूलं प्रवर्त्तन्ते ज्ञातिषु ज्ञातयो यदा ।
तदा स्नेहं प्रकुर्व्वन्ति रिपुत्वं तु विपर्य्ययात् ॥२७॥
अहितो दृश्यते ज्ञातिरज्ञातिर्दृश्यते हितः ।
स्नेहं कार्य्यान्तराल्लोकश्छिनत्ति च करोति च ॥२८॥
स्वयमेव यथालिख्य रज्येच्चित्रकरः स्त्रियम् ।
तथा कृत्वा स्वयं स्नेहं सङ्गमेति जने जनः ॥२९॥
योऽभवत् बान्धवजनः परलोके प्रियस्तव ।
स ते कमर्थं कुरुते त्वं वा तस्मै करोषि कम् ॥४०॥
तस्मात् ज्ञातिवितर्केन मनो नावेष्टुमर्हसि ।
व्यवस्था नास्ति संसारे स्वजनस्य जनस्य च ॥४१॥

असौ क्षेमो जनपदः सुभिक्षोऽसावसौ शिवः ।
इत्येवमथ जायेत वितर्कस्तव कश्चन ॥४२॥
प्रहेयः स त्वया सौम्य नाधिवास्यः कथञ्चन ।
विदित्वा सर्व्वमादीप्तं तैस्तैर्दोषाग्निभिर्जगत् ॥४३॥
ऋतुचक्रविवर्त्ताच्च क्षुत्पिपासाक्लमादपि ।
सर्व्वत्र नियतं दुःखं न क्वचिद्विद्यते शिवम् ॥४४॥
क्वचित् शीतं क्वचिद्घर्मः क्वचिद्रोगो भयं क्वचित् ।
बाधतेऽभ्यधिकं लोके तस्मादशरणं जगत् ॥४५॥
जरा व्याधिश्च मृत्युश्च लोकस्यास्य महद्भयम् ।
नास्ति देशः स यत्रास्य तद्भयं[1] नोपपद्यते ॥४६॥
यत्र गच्छति कायोऽयं दुःखं तत्रानुगच्छति ।
नास्ति काचित् गतिर्लोके गतो यत्र न बाध्यते ॥४७॥
रमणीयोऽपि देशः सन् सुभिक्षः क्षेम एव च ।
कुदेश इति विज्ञेयो यत्र क्लेशैर्विदह्यते ॥४८॥
लोकस्याभ्याहतस्यास्य दुःखैः शारीरमानसैः ।
क्षेमः कश्चिन्न देशोऽस्ति स्वस्थो यत्र गतो भवेत् ॥४९॥
दुःखं सर्व्वत्र सर्व्वस्य वर्त्तते सर्व्वदा यदा ।
छन्दरागमतः सौम्य लोकचित्रेषु मा कृथाः ॥५०॥
यदा तस्मान्निवृत्तस्ते छन्दरागो भविष्यति ।
जीवलोकं तदा सर्व्वमादीप्तमिव मंस्यसे ॥५१॥

---

१ P. M. omits नास्ति देशः स यत्रास्य तद्भयं ।

अथ कश्चित् वितर्कस्ते भवेदमरणाश्रयः ।
यत्नेन स विहन्तव्यो व्याधिरात्मगतो यथा ॥५२॥
मुहूर्त्तमपि विश्रम्भः कार्य्यो न खलु जीविते ।
निलीन इव हि व्याघ्रः कालो विश्वस्तघातकः ॥५३॥
बलस्थोऽहं युवा वेति न ते भवितुमर्हति[1] ।
मृत्युः सर्व्वास्ववस्थासु हन्ति नावेक्षते वयः ॥५४॥
क्षेत्रभूतमनर्थानां शरीरं परिकर्षतः ।
स्वास्थाशा जीविताशा वा न दृष्टार्थस्य जायते ॥५५॥
निर्व्वृतः[2] को भवेत्कायं महाभूताश्रयं वहन् ।
परस्परविरुद्धानामहीनामिव भाजनम् ॥५६॥
प्रश्वसित्ययमन्वक्षं यदुच्छ्वसिति मानवः ।
अवगच्छ तदाश्चर्य्यमविश्वास्यं हि जीवितम् ॥५७॥
इदमाश्चर्य्यमपरं यत्सुप्तः प्रतिबुध्यते ।
स्वपित्युत्थाय वा भूयो बह्वमित्रा हि[3] देहिनः ॥५८॥
गर्भात् प्रभृति यो लोकं जिघांसुरनुगच्छति ।
कस्तस्मिन् विश्वसेन्मृत्यावुद्यतासावराविव ॥५९॥
प्रसूतः पुरुषो लोके श्रुतवान् बलवानपि ।
न जयत्यन्तकं कश्चिन्नाजयन्नापि जेष्यति ॥६०॥
साम्ना[4] दानेन भेदेन दण्डेन नियमेन वा ।
प्राप्तो हि रभसो मृत्युः प्रतिहन्तुं न शक्यते ॥६१॥

---

१ P. M. चेति न ते भवितुमर्हसि । २ P. M. निवृतः ।
३ P. L. M. lacuna, P. M. बह्वमित्रालि T. ४ P. M. साम्ना ।

तस्मान्नायुषि विश्वासं चञ्चले कर्त्तुमर्हसि ।
नित्यं[1] हरति कालो हि स्थाविर्य्यं न प्रतीक्षते ॥६२॥

निःशोकं पश्यतो लोकं तोयबुद्बुददुर्ब्बलम् ।
कस्यामरवितर्को हि स्यादनुन्मत्तचेतसः ॥६३॥

तस्मादेषां वितर्काणां प्रहाणार्थं समासतः ।
आनापानस्मृतिं सौम्य विषयीकर्त्तुमर्हसि ॥६४॥

इत्यनेन प्रयोगेण काले सेवितुमर्हसि ।
प्रतिपक्षं वितर्काणां गदानामगदानिव ॥६५॥

सुवर्णहेतोरिव पांशुधावको
विहाय पांशून् बृहतो यथादितः ।
जहाति सूक्ष्मानपि तद्विशुद्धये
विशोध्य हेमावयवान्नियच्छति ॥६६॥

विमोक्षहेतोरपि युक्तमानसो
विहाय दोषान् बृहतस्तथादितः ।
जहाति सूक्ष्मानपि तद्विशुद्धये[2]
विशोध्य धर्म्मावयवान्नियच्छति ॥६७॥

क्रमेणाद्भिः शुद्धं कनकमिह पांशुव्यवहितम्
यथाग्नौ कर्म्मारः पचति भृशमावर्त्तयति च ।
तथा योगाचारो निपुणमिह दोषव्यवहितम्
विशोध्य क्लेशेभ्यः शमयति मनः संक्षिपति च ॥६८॥

---

१ P. M. नित्य T. २ P. M. द्विशुद्धये ।

यथा च स्वच्छन्दादुपनयति कर्म्माश्रयसुखं
सुवर्णं कर्म्मारो बहुविधमलंकारविधिषु ।
मनः शुद्धं भिक्षुर्वशगतमभिज्ञास्वपि तथा
यथेच्छं यत्रेच्छं शमयति मनः प्रेरयति च ॥६९॥

इति सौन्दरनन्दे महाकाव्ये वितर्कप्रहाणो नाम
पञ्चदशः सर्गः ।

## षोडशः सर्गः

एवं मनोधारणया क्रमेण व्यपोह्य किञ्चित् समुपोह्य किञ्चित् ।
ध्यानानि चत्वार्य्यधिगम्य योगी प्राप्नोत्यभिज्ञा[1] नियमेन पञ्च ॥१॥
ऋद्धिप्रवेकञ्च बहुप्रकारं परस्य चेतश्चरितावबोधम् ।
अतीतजन्मस्मरणञ्च दीर्घं दिव्ये[2] विशुद्धे श्रुतिचक्षुषी च ॥२॥
अतःपरं तत्त्वपरीक्षणेन मनो[3] दधात्यास्रवसंक्षयाय ।
ततो हि दुःखप्रभृतीनि सम्यक् चत्वारि सत्यानि पदान्यवैति ॥३॥
बाधात्मकं दुःखमिदं प्रसक्तं दुःखस्य हेतुः प्रभवात्मकोऽयम् ।
दुःखक्षयो निःशरणात्मकोऽयं त्राणात्मकोऽयं प्रशमाय मार्गः ॥४॥
इत्यार्य्यसत्यान्यवबुध्य बुद्ध्या चत्वारि सम्यक् प्रतिबुध्य चैव ।
सर्व्वास्रवान् भावनयाभिभूय न जायते शान्तिमवाप्य भूयः ॥५॥
अबोधतो ह्यप्रतिवेधतश्च तत्त्वात्मकस्यास्य चतुष्टयस्य ।
भवाद्भवं याति न शान्तिमेति संसारदोला[4]मधिरोह्य लोकः ॥६॥
तस्माज्जरादेर्व्यसनस्य मूलं समासतो दुःखमवैहि जन्म ।
सर्व्वौषधीनामिव भू[5]र्भवाय सर्व्वापदां क्षेत्रमिदं हि जन्म ॥७॥
यज्जन्म रूपस्य हि सेन्द्रियस्य दुःखस्य तन्नैकविधस्य जन्म ।
यः सम्भवश्चास्य समुच्छ्रयस्य मृत्योश्च रोगस्य च सम्भवः सः ॥८॥
सद्वाप्यसद्वा विषमिश्रमन्नं यथा विनाशाय न धारणाय ।
लोके तथा तिर्य्यगुपर्य्यधो वा दुःखाय सर्व्वं न सुखाय जन्म ॥९॥

---

१ P. M. drops त्य । २ P. M. drops ए in दिव्ये ।
३ P. M. ०रीक्षणे मम । ४ P. M. has दोलाधा ।
५ P. M. भुवर्भवाय ।

जराद्यो नैकविधाः प्रजानां सत्यां प्रवृत्तौ प्रभवन्त्यनर्थाः ।
प्रवात्सु घोरेष्वपि मारुतेषु नह्यप्रसूतास्तरवश्चलन्ति ॥१०॥
आकाशयोनिः पवनो यथा हि यथा शमीगर्भशयो हुताशः ।
आपो यथान्तर्वसुधाशयाश्च दुःखं तथा चित्तशरीरयोनि ॥११॥
अपां द्रवत्वं कठिनत्वमुर्व्या वायोश्चलत्वं ध्रुवमौष्ण्यमग्नेः ।
यथा स्वभावो हि तथा स्वभावो दुःखं शरीरस्य च चेतसश्च ॥१२॥
काये सति व्याधिजरादि दुःखं क्षुत्तर्षवर्षोष्णहिमादि चैव ।
रूपाश्रिते चेतसि सानुबन्धे शोकारतिक्रोधभयादि दुःखम् ॥१३॥
प्रत्यक्षमालोक्य च जन्मदुःखं दुःखं तथातीतमपीति विद्धि ।
यथा च तद्दुःखमिदञ्च दुःखं दुःखं तथा नागतमप्यवेहि ॥१४॥
बीजस्वभावो हि यथेह दृष्टो भूतोपि भव्योपि तथानुमेयः ।
प्रत्यक्षतश्च ज्वलनो यथोष्णो भूतोऽपि भव्योपि तथोष्ण एव ॥१५॥
तन्नामरूपस्य गुणानुरूप यत्रैव निर्वृत्तिरुदारवृत्त ।
तत्रैव दुःखं न हि तद्विमुक्तं दुःखं भविष्यत्यभवद्भवेद्वा ॥१६॥
प्रवृत्तिदुःखस्य च तस्य लोके तृष्णादयो दोषगणा निमित्तम् ।
नैवेश्वरो न प्रकृतिर्न कालो नापि स्वभावो न विधिर्यदृच्छा ॥१७॥
ज्ञातव्यमेनेन च कारणेन लोकस्य दोषेभ्य इति प्रवृत्तिः ।
यस्माद् म्रियन्ते सरजस्तमस्का न जायते वीतरजस्तमस्कः ॥१८॥
इच्छाविशेषे सति तत्र तत्र यानासनादिर्भवति प्रयोगः ।
यस्मादतस्तर्षवशा[त्] तथैव जन्म प्रजानामिति वेदितव्यम् ॥१९॥
सत्त्वान्यभिष्वङ्गवशानि दृष्ट्वा स्वजातिषु प्रीतिपराण्यतीव ।
अभ्यासयोगादुपपादितानि तैरेव दो[षै]रिति तानि विद्धि ॥२०॥

क्रोधप्रहर्षादिभिराश्रयाणामुत्पद्यते चेह यथा विशेषः ।
तथैव जन्मस्वपि नैकरूपो निर्वर्त्तते क्लेशकृतो विशेषः ॥२१॥

दोषाधिके[1] जन्मनि तीव्रदोष उत्पद्यते रागिणि तीव्ररागः ।
मोहाधिके मोहबलाधिकश्च तदल्पदोषे च तदल्पदोषः ॥२२॥

फलं हि यादृक् समवैति साक्षात् तदागमो बीज[2]मवैत्यतीतम् ।
अवैत्य बीजप्रकृतिञ्च साक्षादनागतं तत्फलमभ्युपैति ॥२३॥

दोषक्षयो जातिषु यासु यस्य वैराग्यतस्तासु न जायते सः ।
दोषाशयस्तिष्ठति यस्य यत्र तस्योपपत्तिर्विवशस्य तत्र ॥२४॥

तज्जन्मनो नैकविधस्य सौम्य तृष्णादयो हेतव इत्यवेत्य ।
तांश्छिन्धि दुःखाद् यदि निर्मुमुक्षा कार्य्यक्षयः कारणसङ्क्षयाद्धि ॥२५॥

दुःखक्षयो हेतुपरिक्षयाच्च शान्तं शिवं साक्षिकुरुष्व धर्म्मम्[3] ।
तृष्णाविरागं लयनं निरोधं सनातनं त्राणमहार्य्यमार्य्यम् ॥२६॥

यस्मिन्न जाति र्न जरा न मृत्युर्न व्याधयो नाप्रियसम्प्रयोगः ।
नेच्छाविपन्न प्रियविप्रयोगः क्षमं पदं नैष्ठिकमच्युतं तत् ॥२७॥

दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।
दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम् ॥२८॥

एवं कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।
दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम् ॥२९॥

---

१ P. M. दोषा॰ T. २ P. M. बीजग॰ । ३ P. M. धर्म्म ।

अस्याभ्युपायोऽधिगमाय मार्गः प्रज्ञात्रिकल्पः प्रशमद्विकल्पः ।
स भावनीयो विधिवद् बुधेन[1] शीले शुचौ त्रिप्रमुखे स्थितेन ॥३०॥
वाक्कर्म्म सम्यक् सहकायकर्म्म यथावदाजीवनयश्च शुद्धः ।
इदं त्रयं वृत्तविधौ प्रवृत्तं शीलाश्रयं धर्म्मपरिग्रहाय ॥३१॥
सत्येषु दुःखादिषु दृष्टिरार्य्या सम्यग्वितर्कश्च पराक्रमश्च ।
इदं त्रयं ज्ञानविधौ प्रवृत्तं प्रज्ञाश्रयं क्लेशपरिक्षयाय ॥३२॥
न्यायेन सत्याभिगमाय युक्ता सम्यक् स्मृतिः सम्यगथो समाधिः ।
इदं द्वयं योगविधौ प्रवृत्तं शमाश्रयं चित्तपरिग्रहाय ॥३३॥
क्लेशाङ्कुरान्न[2] प्रतनोति शीलं बीजाङ्कुरान् काल इवातिवृत्तः ।
शुचौ हि शीले पुरुषस्य दोषा मनः सलज्जा इव धर्षयन्ति ॥३४॥
क्लेशांस्तु विष्कम्भयते समाधिर्वेगानिवाद्रिर्महतो नदीनाम् ।
स्थिते समाधौ हि न धर्षयन्ति दोषा भुजङ्गा इव मन्त्रबद्धाः ॥३५॥
प्रज्ञा त्वशेषेण निहन्ति दोषांस्तीरद्रुमान् प्रावृषि निम्नगेव ।
दग्धा यया न प्रभवन्ति दोषा वज्राग्निनेवानुसृतेन वृक्षाः ॥३६॥
त्रिस्कन्धमेतं प्रविगाह्य मार्गं प्रस्पष्टमष्टाङ्गमहार्य्यमार्य्यम् ।
दुःखस्य हेतून् प्रजहाति दोषान् प्राप्नोति चात्यन्तशिवं पदं तत् ॥३७॥
अस्योपचारं धृतिरार्जवञ्च ह्रीरप्रमादः प्रविविक्तता च ।
अल्पेच्छता तुष्टिरसङ्गता च लोकप्रवृत्तावरतिः क्षमा च ॥३८॥
याथात्म्यतो विन्दति यो हि दुःखं तस्योद्भवं तस्य च यो निरोधम् ।
आर्य्येण मार्गेण स शान्तिमेति कल्याणमित्रैः सह वर्त्तमानः ॥३९॥

---

१ P. M. drops धे in बुधेन ।    २ P. M. ०ङ्कुरं ।

यो व्याधितो व्याधिमवैति सम्यग् व्याधेर्निदानञ्च तदौषधञ्च ।
आरोग्यमाप्नोति हि सोऽचिरेण[1] मित्रैरभिज्ञैरुपचर्य्यमाणः ॥४०॥

तद् व्याधिसंज्ञां कुरु दुःखसत्ये दोषेष्वपि व्याधिनिदानसंज्ञाम् ।
आरोग्यसंज्ञाञ्च निरोधसत्ये भैषज्य[2]संज्ञामपि मार्गसत्ये ॥४१॥

तस्मात् प्रवृत्तिं परिगच्छ दुःखं प्रवर्त्तकानप्यवगच्छ दोषान् ।
निवृत्तिमागच्छ च तन्निरोधं निवर्त्तकञ्चाप्यवगच्छ मार्गम् ॥४२॥

शिरस्यथो वाससि संप्रदीप्ते सत्यावबोधाय मतिर्विचार्य्या ।
दग्धं जगत् सत्यनयं ह्यदृष्ट्वा प्रदह्यते सम्प्रति धक्ष्यते[3] च ॥४३॥

यदैव यः पश्यति नामरूपं क्षयीति तद्दर्शनमस्य सम्यक् ।
सम्यक् च निर्वेदमुपैति पश्यन् नन्दीक्षयाच्च क्षयमेति रागः ॥४४॥

तयोश्च नन्दीरजसोः क्षयेण सम्यग् विमुक्तं प्रवदामि चेतः ।
सम्यग् विमुक्तिर्मनसश्च ताभ्यां न चास्य भूयः करणीयमस्ति ॥४५॥

यथास्वभावेन हि नामरूपं तद्धेतुमेवास्तगमं च तस्य ।
विजानतः पश्यत एव चाहं ब्रवीमि सम्यक् क्षयमास्रवाणाम् ॥४६॥

तस्मात् परं सौम्य विधाय वीर्य्यं शीघ्रं चकास्स्वास्रवसंक्षयाय ।
दुःखानानित्यांश्च निरात्मकांश्च धातून् विशेषेण[4] परीक्षमाणः ॥४७॥

धातून् हि षड्भू[5]सलिलानलादीन् सामान्यतः स्वेन च लक्षणेन ।

---

१ P. M. क्षिप्रम, P. L. M. अचिरेण which spoil the metre.

२ P. L. M. भैषज्य॰ । ३ P. M. सम्प्रतिवक्ष्यते ।

४ P. M. धातुविशेषेण which spoils the metre.

५ P. M. धातुं हि षट्कं ।

अवैति यो नान्यमवैति तेभ्यः सोऽत्यन्तिकं मोक्षमवैति तेभ्यः ॥४८॥

क्लेशप्रहाणाय च निश्चितेन कार्योऽभ्युपायश्च परीक्षितव्यः।
योगोऽप्यकाले ह्यनुपायतश्च भवत्यनर्थाय न तद्गुणाय ॥४९॥
अजातवत्सा यदि गा दुहीत नैवाप्नुयात् क्षीरमकालदोही।
कालेऽपि वा स्यान्न पयो लभेत मोहेन शृङ्गाद् यदि गा दुहीत॥५०॥
आर्द्राच्च काष्ठाज्ज्वलनाभिकामो नैव प्रयत्नादपि वह्निमृच्छेत्।
काष्ठाच्च शुष्कादपि पातनेन नैवाग्निमाप्नोत्यनुपायपूर्व्वम् ॥५१॥
तद्देशकालौ विधिवत्परीक्ष्य योगस्य मात्रामपि चाभ्युपायम्।
बलाबले चात्मनि संप्रधार्य्य कार्य्यः प्रयत्नो न तु तद्विरुद्धः ॥५२॥

प्रग्राहकं यत्तु निमित्तमुक्तमुद्धन्यमाने हृदि तन्न सेव्यम्।
एवं हि चित्तं प्रशमं न याति [न] वह्निना वह्निरिवेर्य्यमाणः ॥५३॥
शमाय [य]त्स्यान्नियन्निमित्तं जातोद्धवे चेतसि तस्य कालः।
एवं हि चित्तं प्रशमं नियच्छत्य[ु]दीर्य्यमाणोऽग्निरिवोदकेन ॥५४॥
शमावहं यत् [नियतं] निमित्तं सेव्यं न तच्चेतसि लीयमाने।
एवं हि भूयो लयमेति चित्तमनीर्य्यमाणोऽग्निरिवाल्पसारः ॥५५॥
प्रग्राहकं यन्नियतं निमित्तं लयं गते चेतसि तस्य कालः।
क्रियासमर्थं हि मनस्तदा स्यात् मन्दायमानोऽग्निरिवेन्धनेन ॥५६॥
औपेक्षिकं नापि निमित्तमिष्टं लयं गते चेतसि सोद्धवे वा।
एवं हि तीव्रं जनयेदनर्थमुपेक्षितो व्याधिरिवातुरस्य ॥५७॥
यत्स्यादुपेक्षा नियतं निमित्तं साम्यं गते चेतसि तस्य कालः।
एवं हि कृत्याय भवेत् प्रयोगो रथो विधेयाश्व इव प्रयातः ॥५८॥
रागोद्धतव्याकुलितेऽपि चित्ते मैत्रोपसंहारविधिर्न कार्य्यः।

रागात्मको मुह्यति मैत्रया हि स्नेहं कफक्षोभ[1] इवोपयुज्य ॥५९॥
रागोद्भवे चेतसि धैर्य्यमेत्य निषेवितव्यं त्वशुभं निमित्तम् ।
रागात्मको ह्येवमुपैति शर्म्म कफात्मको रूक्षमिवोपयुज्य ॥६०॥
व्यापाद[2]दोषेण मनस्युदीर्णे न सेवितव्यं त्वशुभं निमित्तम् ।
द्वेषात्मकस्य ह्यशुभा वधाय पित्तात्मनस्तीक्ष्ण इवोपचारः ॥६१॥
व्यापाददोषक्षुभिते तु चित्ते सेव्या स्वपक्षोपनयेन मैत्री ।
द्वेषात्मनो हि प्रशमाय मैत्री पित्तात्मनः शीत इवोपचारः ॥६२॥
मोहानुबद्धे मनसः प्रचारे मैत्रा शुभा चैव भवत्ययोगः ।
ताभ्यां हि संमोहमुपैति भूयो वाय्वात्मको रूक्षमिवोपनीय ॥६३॥
मोहात्मिकायां मनसः प्रवृत्तौ सेव्यस्त्विदंप्रत्ययताविहारः ।
मूढे मनस्येष हि शान्तिमार्गो वाय्वात्मके स्निग्ध इवोपचारः ॥६४
उल्कामुखस्थं हि यथा सुवर्णं सुवर्णकारो धमतीह काले ।
काले परिप्रोक्षयते जलेन क्रमेण काले समुपेक्षते च ॥६५॥
दहेत्सुवर्णं हि धमन्न काले जले क्षिपन् संशमयेदकाले ।
न चापि सम्यक् परिपाकमेनं नयेदकाले समुपेक्षमाणः ॥६६॥
संप्रग्रहस्य प्रशमस्य चैव तथैव काले समुपेक्षणस्य ।
सम्यग् निमित्तं मनसा त्ववेक्ष्यं नाशो हि यत्नोऽप्यनुपायपूर्व्वः ॥६७

इत्येवमन्यायनिवर्त्तनञ्च न्यायञ्च तस्मै सुगतो बभाषे ।
भूयश्च तत्तच्चरितं विदित्वा वितर्कहानाय विधीनुवाच ॥६८॥
यथा भिषक् पित्तकफानिलानां य एव कोपं[3] समुपैति दोषः ।

---

१ P. L. M. ०क्षोभय । २ P. M. व्यापार० ।
३ P. M. कोषं ।

शमाय तस्यैव विधिं विधत्ते व्यधत्त दोषेषु तथैव बुद्धः ॥६९॥
एकेन कल्पेन स चेन्न हन्यात् स्वभ्यस्तभावादशुभान् वितर्कान् ।
ततो द्वितीयं क्रममारभेत नत्वेव हेयो गुणवान् प्रयोगः ॥७०॥
अनादिकालोपचितात्मकत्वात् बलीयसः क्लेशगणस्य चैव ।
सम्यक्प्रयोगस्य च दुष्करत्वात् छेत्तुं न शक्याः सहसा हि दोषाः ॥७१॥
अण्व्या यथाण्या विपुलाणिरन्या निर्वाह्यते तद्विदुषा नरेण ।
तद्वत् तदेवाकुशलं निमित्तं क्षिपेन् निमित्तान्तरसेवनेन ॥७२॥
तवाथवाध्यात्मनवग्रहत्वान्नैवोपशाम्येदशुभो वितर्कः ।
हेयः स तद्दोषपरीक्षणेन सश्वापदो मार्ग इवाध्वगेन ॥७३॥
यथा क्षुधार्त्तोपि विषेण पृक्तं जिजीविषुर्नेच्छति भोक्तुमन्नम् ।
तथैव दोषावहमित्यवेत्य जहाति विद्वानशुभं निमित्तम् ॥७४॥
न दोषतः पश्यति यो हि दोषं कस्तं ततो वारयितुं समर्थः ।
गुणं गुणे पश्यति यश्च यत्र स वार्य्यमाणोपि ततः प्रयाति ॥७५॥
व्यपत्रपन्ते हि कुलप्रसूता मनःप्रचारैरशुभैः प्रवृत्तैः ।
कण्ठे मनस्वांश्च युवा वपुष्मान् न चाक्षुषैरप्रयुतै विषक्तैः ॥७६॥
निर्धूयमाणास्त्वथ लोषतोपि तिष्ठेयुरेवाकुशला वितर्काः ।
कार्य्यान्तरैरध्ययनक्रियाद्यैः सेव्यो विधिर्विस्मरणाय तेषाम् ॥७७॥
स्वप्तव्यमप्येव विच[क्ष]णेन कायक्लमो वापि निषेवितव्यः ।
नत्वेव सञ्चिन्त्यमसन्निमित्तं यत्रावसक्तस्य भवेदनर्थः ॥७८॥
यथा हि भीतो निशि तस्करेभ्यो द्वार[ं] प्रियेभ्योऽपि न दातुमिच्छेत् ।
प्राज्ञस्तथा संहरति प्रयोगं समं शुभस्याप्यशुभस्य[1] दोषैः ॥७९॥

---

१ P. L. M. drops ०प्यशुभस्य ।

एवं प्रकारैरपि यद्युपायैर्निवार्य्यमाणा न पराङ्मुखाः स्युः ।
ततो यथास्थूलनिवर्हणेन सुवर्णदोषा इव ते प्रहेयाः ॥८०॥
द्रुतप्रयाणप्रभृ[तींश्च] तीक्ष्णकामप्रयोगात् परिखिद्यमानः ।
यथा नरः संश्रयते तथैव प्राज्ञेन दोषेष्वपि वर्त्तितव्यम् ॥८१॥
ते चेदलब्धप्रतिपक्षभावा नैवोपशाम्येयुरसद्वितर्काः ।
मुहूर्त्तमप्यप्रतिबध्यमाना गृहे भुजङ्गा इव नाधिवास्याः ॥८२॥
दन्तेऽपि दन्तं[1] प्रणिधाय कामं ताल्वग्रमुत्पीड्य च जिह्वयापि ।
चित्तेन चित्तं परिगृह्य चापि कार्य्यः प्रयत्नो न तु तेऽनुवृत्ताः ॥८३॥
किमत्र चित्रं यदि वीतमोहो वनं गतः स्वस्थमना न मुह्येत् ।
आक्षिप्यमाणो हृदि तन्निमित्ते न क्षोभ्यते यः स कृती स धीरः ॥८४॥
तदार्य्यसत्याधिगमाय पूर्व्वं विशोधयानेन नयेन मार्गम् ।
यत्रागतः शत्रुविनिग्रहार्थं[2] राजेव लक्ष्मीमजितां जिगीषन् ॥८५॥
एतान्यरण्यान्यभितः शिवानि योगानुकूलान्यजनेरितानि ।
कायस्य कृत्वा प्रविवेकमात्रं क्लेशप्रहाणाय भजस्व मार्गम् ॥८६॥
कौण्डिन्य-नन्दक्रिमिलानिरुद्धाः तिष्योपसेनौ विमलोऽथ राधः[3] ।
बाष्योत्तरौ धौतकि-मोहराजौ कात्यायनद्रव्यपिलिन्दवत्साः ॥८७॥
भद्दालि-भद्रायण-सर्पदास-सुभूति-गोदत्त-सुजात-वत्साः ।
संग्रामजिद् भद्रजिदश्वजिच्च श्रोणश्च शोणश्च स कोटिकर्णः ॥८८॥
क्षेमाजितो[4] नन्दकनन्दमाता वुपालि-वागीश-यशोयशोदाः ।
महाह्वयो वल्कलि-राष्ट्रपालौ सुदर्शन-स्वागत-मेघिकाश्च ॥८९॥

---

१ P. M. दत्तं । २ P. M. ०विनिर्व्वर्हार्थं ।
३ P. M. रूघः । ४ P. M. क्षमाजितो ।

स कप्फिनः काश्यपश्चोरुविल्वो महामहाकाश्यप-तिष्य-नन्दाः ।
पूर्णश्च पूर्णश्च स पूर्णकश्च शोणापरान्तश्च स पूर्ण एव ॥९०॥

शारद्वतीपुत्र-सुबाहु-चुन्दाः कोन्देय-काप्य-भृगु-कुण्ठधानाः ।
सशैवलौ रैवत-कौष्ठिलौ च मौद्गल्यगोत्रश्च गवांपतिश्च ॥९१॥

यं विक्रमं योगविधावकुर्वंस्तमेव शीघ्रं विधिवत् कुरुष्व ।
ततः पदं प्राप्स्यसि तैरवाप्तं सुखावृतैस्त्वन्नियतं यशश्च ॥९२॥

द्रव्यं यथा स्यात् कटुकं रसेन तच्चोपयुक्तं मधुरं विपाके ।
तथैव वीर्य्यं[1] कटुकं श्रमेण तस्यार्थसिद्धौ मधुरो विपाकः ॥९३॥

वीर्य्यं परं कार्य्यकृतौ हि मूलं वीर्य्यादृते काचन नास्ति सिद्धिः ।
उदेति वीर्य्यादिह सर्वसम्पन्निर्वीर्य्यता चेत्सकलश्च पाप्मा ॥९४॥

अलब्धस्यालाभो नियतमुपलब्धस्य विगमः
तथैवात्मावज्ञा कृपणमधिकेभ्यः परिभवः ।
तमो निस्तेजस्त्वं श्रुतिनियमतुष्टिव्युपरमो
नृणां निर्वीर्य्याणां भवति विनिपातश्च भवति ॥९५॥

नयं श्रुत्वा शक्तो यदयमभिवृद्धिं न लभते
परं धर्म्मं ज्ञात्वा यदुपरि निवासं न लभते ।
गृहं त्यक्त्वा मुक्तौ यदयमुपशान्तिं न लभते
निमित्तं कौसीद्यं भवति पुरुषस्यान्तररिपुः ॥९६॥

अनिक्षिप्तोत्साहो यदि खनति गां वारि लभते
प्रसक्तं व्यामथ्नन् ज्वलनमरणिभ्यां जनयति ।

---

[1] P. M. वीर्य्य० ।

प्रयुक्ता योगे तु ध्रुवमुपलभन्ते श्रमफलं
द्रुतं नित्यं यान्त्यो गिरिमपि हि भिन्दन्ति सरितः ॥९७॥

कृष्ट्वा गां परिपाल्य च श्रमशतैरश्नाति सस्यश्रियं
यत्नेन प्रविगाह्य सागरजलं रत्नश्रिया क्रीडति ।
शत्रूणामवधूय वीर्य्यमिषुभिर्भुङ्क्ते नरेन्द्रः श्रियं
तद्वीर्य्यं कुरु शान्तये विनियतं वीर्य्ये हि सर्वर्द्धये ॥९८॥

इति सौन्दरनन्दे महाकाव्ये आर्य्यसत्यव्याख्यानो
नाम षोडशः सर्गः ।

---

# सप्तदशः सर्गः

अथैवमादेशिततत्त्वमार्गो नन्दस्तदा प्राप्तविमोक्षमार्गः ।
सर्वेण भावेन गुरौ प्रणम्य क्लेशप्रहाणाय वनं जगाम ॥१॥

तत्रावकाशं[1] मृदुनीलशष्पं ददर्श शान्तं तरुषण्डवन्तम् ।
निःशब्दया निम्नगयोपगूढं वैदूर्य्यनीलोदकया वहन्त्या ॥२॥

स पादयोस्तत्र विधाय शौचं शुचौ शिवे श्रीमति वृक्षमूले ।
मोक्षाय बद्धा व्यवसायकक्षां पर्य्यङ्कमङ्कावहितं बबन्ध ॥३॥

राजन्[2] समग्रं प्रणिधाय कायं काये स्मृतिं चाभिमुखीं विधाय ।
सर्वेन्द्रियाण्यात्मनि सन्निधाय स तत्र योगं प्रयतः प्रपेदे ॥४॥

ततः स तत्त्वं निखिलं चिकीर्षु र्मोक्षानुकूलांश्च विधींश्चिकीर्षन् ।
ज्ञानेन लोक्येन शमेन चैव चचार चेतः परिकर्म्मभूमौ ॥५॥

संधाय धैर्य्यं प्रणिधाय वीर्य्यं[3] व्यपोह्य सक्तिं परिगृह्य शक्तिम् ।
प्रशान्तचेता नियमस्थचेताः स्वस्थस्ततो[भू]द्विषयेष्वनास्थः ॥६॥

आतप्तबुद्धेः प्रहितात्मनोऽपि स्वभ्यस्तभावादथ कामसंज्ञा ।
पर्य्याकुलं तस्य मनश्चकार प्रावृट्सु विद्युज्जलमागतेव ॥७॥

स पर्य्यवस्थानमवेत्य सद्यश्चिक्षेप तां धर्म्मविघात-कर्त्रीम् ।
प्रियामपि क्रोधपरीतचेता नारीमिवोद्वृत्तगुणां मनस्वी ॥८॥

आरब्धवीर्य्यस्य मनः शमाय भूयस्तु तस्याकुशलो वितर्कः ।
व्याधिप्रणाशाय निविष्ट[4]बुद्धेरुपद्रवो घोर इवाजगाम ॥९॥

---

१ P. M. तत्रावभासं । २ P. M. राज्यं ।
३ P. M. धैर्य्यं । ४ P. M. निरष्ठ० ।

स तद्विघाताय निमित्तमन्यद्योगानुकूलं कुशलं प्रपेदे ।
आर्त्तायनं क्षीणबलो बलस्थं निरस्यमानो बलिनारिणेव ॥१०॥

पुरं विधायानुविधाय दण्डं मित्राणि संगृह्य रिपून् विगृह्य ।
राजा यथाप्नोति हि गामपूर्व्वां नीति र्मुमुक्षोरपि सैव योगे ॥११॥

विमोक्षकामस्य हि योगिनोपि मनः पुरं ज्ञानविधिश्च दण्डः ।
गुणाश्च मित्राण्यरयश्च दोषा भूमिर्विमुक्ति र्यतते यदर्थम् ॥१२॥

स दुःखजालान्महतो मुमुक्षुर्विमोक्षमार्गाधिगमे विविक्तः ।
पन्थानमार्य्यं परमं दिदृक्षुः शमं ययौ किञ्चिदुपात्तचक्षुः[1] ॥१३॥

यः स्यान्निकेतस्तमसोऽनिकेतः श्रुत्वापि तत्त्वं स भवेत्प्रमत्तः ।
यस्मात्तु[2] मोक्षाय स पात्रभूतः तस्मान्मनः स्वात्मनि संजहार ॥१४॥

सम्भारतः प्रत्ययतः स्वभावादास्वादतो दोषविशेषतश्च ।
अथात्मवान् निःशरणात्मतश्च धर्म्मेषु चक्रे विधिवत् परीक्षाम् ॥१५॥

सरूपिणं कृत्स्नमरूपिणञ्च सारं दिदृक्षुर्विचिकाय कायम् ।
अथाशुचिं दुःखमनित्यमस्वं निरात्मकं चैव चिकाय कायम् ॥१६॥

अनित्यतस्तत्र हि शून्यतश्च निरात्मतो दुःखत एव चापि ।
मार्गप्रवेकेन स लौकिकेन क्लेशद्रुमं सञ्चलयाञ्चकार ॥१७॥

यस्मादभूत्वा भवतीह सर्व्वं भूत्वा च भूयो न भवत्यवश्यम् ।
सहेतुकञ्च क्षयिहेतुमच्च तस्मादनित्यं जगदित्यविन्दत् ॥१८॥

यतः प्रसूतस्य च कर्म्मयोगः प्रसज्यते बन्धविघातहेतुः ।
दुःखप्रतीकारविधौ सुखाख्यं ततो भवं दुःखमिति व्यपश्यत् ॥१९॥

---

१ P. M. उपान्त० । २ P. M. तस्मात् ।

यतश्च संस्कारगतं विविक्तं न कारकः कश्चन वेदको वा ।
सामग्र्यतः सम्भवति प्रवृत्तिः शून्यं ततो लोकमिमं ददर्श ॥२०॥
यस्मान्निरीहं जगदस्वतन्त्रं नैश्वर्य्यमेकः[1] कुरुते क्रियासु ।
तत्तत् प्रतीत्य प्रभवन्ति भावा निरात्मकं तेन विवेद लोकम् ॥२१॥

ततः स वातं व्यजनादिवोष्णे काष्ठाश्रितं निर्मथनादिवाग्निम् ।
अन्तःक्षितिस्थं खननादिवाम्भो लोकोत्तरं वर्त्म दुरापमाप ॥२२॥
सज्ज्ञान-चाप-स्मृति-वर्म्म बद्ध्वा विशुद्धशीलव्रतवाहनस्थः ।
क्लेशारिभिश्चित्तरणाजिरस्थैः सार्द्धं युयुत्सु र्विजयाय तस्थौ ॥२३॥
ततः स बोध्यङ्गशिताप्तशस्त्रः सम्यक्प्रधानोत्तमवाहनस्थः ।
मार्गाङ्गमातङ्गवता बलेन शनैः शनैः क्लेशचमूं जगाहे ॥२४॥
स स्मृत्युपस्थानमयैः पृषत्कैः शत्रून् विपर्य्यासमयान् क्षणेन ।
दुःखस्य हेतूंश्चतुरश्चतुर्भिः स्वैः स्वैः प्रचारायतनै र्ददार ॥२५॥
आर्य्यैर्बलैः पञ्चभिरेव पञ्च चेतःखिलान्यप्रतिमै र्बभञ्ज ।
मिथ्याङ्गनागांश्च तथाङ्गनागैर्विनिर्दुधावाष्टभिरेव सोऽष्टौ ॥२६॥

अथात्मदृष्टिं सकलां विधूय चतुर्षु सत्येष्वकथंकथः सन् ।
विशुद्धशीलव्रतदृष्टधर्म्मा धर्म्मस्य पूर्व्वां फलभूमिमाप ॥२७॥
स दर्शनादार्य्यचतुष्टयस्य क्लेशैकदेशस्य च विप्रयोगात् ।
प्रत्यात्मिकाच्चापि विशेषलाभात् प्रत्यक्षतो ज्ञानसुखस्य चैव ॥२८॥
दार्ढ्यात् प्रसादस्य धृतेः स्थिरत्वात् सत्येष्वसंमूढतया चतुर्षु ।
शीलस्य चाच्छिद्रतमोत्तमस्य निःसंशयो धर्म्मविधौ बभूव ॥२९॥

---

[1] P. M. एकं ।

कुदृष्टिजालेन स विप्रयुक्तो लोकं तथाभूतमवेक्षमाणः ।
ज्ञानाश्रयं प्रीतिमुपाजगाम भूयः प्रसादश्च गुराविथाय ॥२०॥
यो हि प्रवृत्तिन्नियतामवैति नैवान्यहेतोरिह नाप्यहेतोः ।
प्रतीत्य तत्तत्[1] समवैति तत्तत् स नैष्ठिकं पश्यति धर्ममार्य्यम् ॥२१॥
शान्तं शिवं निर्ज्जरसं विरागं निःश्रेयसं पश्यति यश्च धर्मं ।
तस्योपदेष्टारमथार्य्यवर्य्यं संप्रेक्षते बुद्धमवाप्तचक्षुः ॥२२॥
यथोपदेशेन शि[वे]न मुक्तो रोगादरोगो भिषजं कृतज्ञः ।
अनुस्मरन् पश्यति चित्तदृष्ट्या मैत्र्या च शास्त्रे ज्ञतया च तुष्टः ॥२३॥
आर्य्येण मार्गेण तथैव मुक्तस्तथागतं तत्त्वविदार्य्यतत्त्वः ।
अनुस्मरन् पश्यति कायसाक्षी मैत्र्या च सर्वज्ञतया च तुष्टः ॥२४॥
स नाशकैर्दृष्टिगतैर्विमुक्तः पर्य्य[न्त]मालोक्य पुनर्भवस्य ।
वक्त्रे घृणाक्लेशविजृम्भितेषोर्म्मृत्यो र्न तत्रास न दुर्गतिभ्यः ॥२५॥
त्वक्स्नायुमेदोरुधिरास्थिमांसकेशादिनाऽमेध्यगणेन पूर्णम् ।
ततः स कायं समवेक्षमाणः सारं विचिन्त्याण्वपि नोपलेभे ॥२६॥

स कामरागप्रतिघौ स्थिरात्मा तेनैव योगेन तनू चकार ।
कृत्वा महोरस्कतनुस्तनू तौ प्रापद्द्वितीयं फलमार्य्यधर्म्मे ॥२७॥
स लोभचापं परिकल्पबाणं रागं महावैरिणमल्पशेषम् ।
कायस्वभावाधिगतैर्बिभेद योगायुधास्त्रैरशुभापृषत्कैः ॥२८॥
द्वेषायुधं क्रोधविकीर्णबाणं व्यापादमन्तःप्रसवं सपत्नम् ।
मैत्रीपृषत्कै र्धृतितूणसंस्थैः क्षमाधनुर्ज्याविसृतै र्जघान ॥२९॥

---

[1] P. M. drops तत्त० ।

मूलान्यथ त्रीण्यशुभस्य वीरस्त्रिभिर्विमोक्षायतनैश्चकर्त्त ।
चमूमुखस्थान् धृतकार्म्मुकांस्त्रीनरीनिवारिस्त्रिभिरायसाग्रैः ॥४०॥
स कामधातोः समतिक्रमाय पार्ष्णिग्रहांस्तानभिभूय शत्रून् ।
योगादनागामिफलं प्रपद्य द्वारीव निर्व्वाणपुरस्य तस्थौ ॥४१॥

कामैर्विविक्तं मलिनैश्च धर्म्मैं र्वितर्कवच्चापि विचारवच्च ।
विवेकजं प्रीतिसुखोपपन्नं ध्यानं ततः स प्रथमं प्रपेदे ॥४२॥
कामाग्निदाहेन स विप्रमुक्तो ह्लादं परं ध्यानसुखादवाप ।
सुखं विगाह्याप्स्विव घर्म्मखिन्नः प्राप्येव चार्थं विपुलं दरिद्रः ॥४३॥
तत्रापि तद्धर्म्मगतान् वितर्कान् गुणागुणे च प्रसृतान् विचारान् ।
बुद्धा मनःक्षोभकरानशान्तांस्तद्विप्रयोगाय मतिञ्चकार ॥४४॥
क्षोभं प्रकुर्व्वन्ति यथोर्म्मयो हि धीरप्रसन्नाम्बुवहस्य सिन्धोः ।
एकाग्रभूतस्य तथोर्म्मिभूताश्चित्ताम्भसः क्षोभकरा वितर्काः ॥४५॥
खिन्नस्य सुप्तस्य च निर्वृतस्य बाधां यथा संजनयन्ति शब्दाः ।
अध्यात्ममेकाग्र्यमुपागतस्य भवन्ति बाधाय तथा वितर्काः ॥४६॥

अथावितर्कं क्रमशोऽविचारमेकाग्रभावान्मनसः प्रसन्नम् ।
समाधिजं प्रीतिसुखं द्वितीयं ध्यानं तदाध्यात्मशिवं स दध्यौ ॥४७॥
तद्ध्यानमागम्य च चित्तमौनं लेभे परां प्रीतिमलब्धपूर्व्वाम् ।
प्रीतौ तु तत्रापि स दोषदर्शी यथा वितर्केष्वभवत्तथैव ॥४८॥
प्रीति[:] परा वस्तुनि यत्र यस्य विपर्य्ययात्तस्य हि तत्र दुःखम् ।
प्रीतेरतः[1] प्रेक्ष्य स तत्र दोषान् प्रीतिक्षये योगमुपारुरोह ॥४९॥

---

१ P. M. प्रीतौवतः T.

प्रीते र्विरागात् सुखमार्य्यजुष्टं कायेन विन्दन्नथ संप्रजानन् ।
उपेक्षकः स स्मृतिमान् व्यहार्षीत् ध्यानं तृतीयं प्रतिलभ्य धीरः ॥५०॥
यस्मात् परं तत्र सुखं सुखेभ्यस्ततः परं नास्ति सुखप्रवृत्तिः ।
तस्माद् बभाषे शुभकृत्स्नभूमिं परापरज्ञः परमेति मैत्र्या ॥५१॥
ध्यानेऽपि तत्राथ ददर्श दोषं मेने परं शान्तिमनिञ्जमेव ।
आभोगतोऽपीञ्जयति स्म तस्य चित्तं प्रवृत्तं सुखमित्यजस्रम् ॥५२॥
यत्रेञ्जितं स्पन्दितमस्ति तत्र यत्रास्ति च स्पन्दितमस्ति दुःखम् ।
यस्मादतस्तत्सुखमिञ्जकत्वात् प्रशान्तिकामा यतयस्त्यजन्ति ॥५३॥
अथ प्रहाणात् सुखदुःखयोश्च मनोविकारस्य च पूर्व्वमेव ।
दध्यावुपेक्षास्मृतिमद्विशुद्धं ध्यानं तथाऽदुःखसुखं चतुर्थम् ॥५४॥
यस्मात्तु तस्मिन् न सुखं न दुःखं ज्ञानं च तत्रास्ति तदर्थचारि ।
तस्मादुपेक्षा स्मृतिपारिशुद्धि[१] र्निरुच्यते ध्यानविधौ चतुर्थे ॥५५॥
ध्यानं स निःश्रित्य ततश्चतुर्थमर्हत्वलाभाय मतिं चकार ।
सन्धाय मित्रं बलवन्तमार्य्यं राजेव देशानजितान् जिगीषुः ॥५६॥
चिच्छेद कार्त्स्न्येन ततः स पञ्च प्रज्ञासिना भावनयेरितेन ।
ऊर्द्धंगमान्युत्तमबन्धनानि संयोजनान्युत्तमबन्धनानि ॥५७॥
बोध्यङ्गनागैरपि सप्तभिः स सप्तैव चित्तानुशयान् ममर्द्द ।
द्वीपानिवोपस्थितविप्रणाशान् कालो ग्रहैः सप्तभिरेव सप्त ॥५८॥
अग्निद्रुमाज्याम्बुषु या हि वृत्तिः कबन्धवाय्वग्निदिवाकराणाम् ।
दोषेषु तां वृत्तिमियाय नन्दो निर्व्वापणोत्पाटनदाहशोषैः ॥५९॥

---

१ P. M. पारिशुद्धं ।

इति त्रिवेगं त्रिझषं त्रिवीचमेकाम्भसं पञ्चरयं द्विकूलम् ।
द्विग्राहमष्टाङ्गवता प्लवेन दुःखार्णवं दुस्तरमुत्ततार ॥६०॥

अर्हत्वमासाद्य स सत्क्रियार्हो निरुत्सुको निष्प्रणयो निराशः ।
विभीर्विशुग्वीतमदो विरागः स एव धृत्यान्य इवावभासे ॥६१॥

भ्रातुश्च शास्तुश्च तयानुशिष्ट्या नन्दस्ततः स्वेन च विक्रमेण ।
प्रशान्तचेताः परिपूर्णकार्य्यो वाणीमिमामात्मगतां जगाद ॥६२॥

नमोऽस्तु तस्मै सुगताय येन हितैषिणा मे करुणात्मकेन ।
बहूनि दुःखान्यपवर्त्तितानि सुखानि भूयांस्युपसंहृतानि ॥६३॥

अहं ह्यनार्य्येण शरीरजेन दुःखात्मके वर्त्मनि कृष्यमाणः ।
निवर्त्तितस्तद्वचनाङ्कुशेन दर्पान्वितो नाग इवाङ्कुशेन ॥६४॥

तस्याज्ञया कारुणिकस्य शास्तुः हृदिस्थमुत्पाट्य हि रागशल्यम् ।
अद्यैव तावत् सुमहत्सुखं मे सर्व्वक्षये किं बत निर्वृतस्य ॥६५॥

निर्व्वाप्य कामाग्निमहं हि दीप्तं धृत्यम्बुना पावकमम्बुनेव ।
ह्लादं परं साम्प्रतमागतोऽस्मि शीतं ह्रदं घर्म्म इवावतीर्णः ॥६६॥

न मे प्रियं किञ्चन नाप्रियं मे न मेऽनुरोधोऽस्ति कुतो विरोधः ।
तयोरभावात्सुखितोऽस्मि सद्यो हिमातपाभ्यामिव विप्रमुक्तः ॥६७॥

महाभयात् क्षेममिवोपलभ्य महावरोधादिव विप्रमोक्षम् ।
महार्णवात् पारमिवाप्लवः सन् भीमान्धकारादिव च प्रकाशम् ॥६८॥

रोगादिवारोग्यमसह्यरूपादृणादिवानृण्यमनन्तसंख्यात् ।
द्विषत्सकाशादिव चापयानं दुर्भिक्षयोगाच्च यथा सुभिक्षम् ॥६९॥

तद्वत् परां शान्तिमुपागतोऽहं यस्यानुभावेन विनायकस्य ।
करोमि भूयः पुनरुक्तमस्मै नमो नमोऽर्हाय तथागताय ॥७०॥

येनाहं गिरिमुपनीय रुक्मशृङ्गं
स्वर्गञ्च प्लवगवधूनिदर्शनेन ।
कामात्मा त्रिदिवचरीभिरङ्गनाभि-
र्निष्कृष्टो युवतिमये कलौ निमग्नः ॥७१॥

तस्माच्च व्यसनपरादनर्थपङ्काद्
उत्क्रम्य क्रमशिथिलः करीव पङ्कात् ।
शान्तेऽस्मिन् विरजसि विज्वरे विशोके
सद्धर्म्मे वितमसि नैष्ठिके विमुक्तः ॥७२॥

तं वन्दे परमनुकंपकं[1] महर्षिं
मूर्द्धाहं प्रकृतिगुणज्ञमाशयज्ञम् ।
संबुद्धं दशबलिनं भिषक्प्रधानं
त्रातारं पुनरपि चास्मि सन्नतस्तम् ॥७३

आर्य्याश्वघोषकृतौ महाकाव्ये सौन्दरनन्दे
अमृताधिगमो नाम सप्तदशः सर्गः ।

---

१ P. M. drops ०पकं ।

# अष्टादशः सर्गः

अथ द्विजो बाल इवाप्तवेदः क्षिप्रं वणिक् प्राप्त इवाप्तलाभः ।
जित्वा च राजन्य इवारिसैन्यं नन्दः कृतार्थो गुरुमभ्यगच्छत् ॥१॥
द्रष्टुं सुखं ज्ञानसमाधि[1]काले गुरुर्हि शिष्यस्य गुरोश्च शिष्यः ।
परिश्रमस्ते [स]फलो मयीति यतो दिदृक्षास्य मुनौ बभूव ॥२॥
यतो हि येनाधिगतो विशेषस्तस्योत्तमां सोऽर्हति कर्त्तुमीड्याम् ।
आर्य्यः सरागोपि कृतज्ञभावात् प्रक्षीणमानः किमु वीतरागः ॥३॥
यस्याथ कामप्रभवा हि भक्तिः स्वतोऽस्य[2] सा तिष्ठति रूढमूला ।
धर्म्मान्वयो यस्य तु भक्तिरागस्तस्य प्रसादो हृदयावगाढः ॥४॥
काषायवासाः कनकावदातस्ततः स मूर्द्ध्ना गुरवे प्रणेमे ।
वातेरितः पल्लवताम्ररागः पुष्पोज्ज्वलश्रीरिव कर्णिकारः ॥५॥
अथात्मनः शिष्यगुणस्य चैव महामुनेः शास्तृगुणस्य चैव ।
सन्दर्शनार्थं स न मानहेतोस्स्वां कार्य्यसिद्धिं कथयाम्बभूव ॥६॥
यो दृष्टिशल्यो हृदयावगाढः प्रभो भृशं मामतुदत्सुतीक्ष्णः ।
त्वद्वाक्यसंदंशमुखेन मे स समुद्धृतः शल्यहृतेव शल्यः ॥७॥
कथंकथीभावगतोऽस्मि येन छिन्नः स निःसंशय संशयो मे ।
त्वच्छासनात् सत्पथमागतोऽस्मि सुदेशिकस्येव पथि प्रनष्टः ॥८॥
यत्पीतमास्वादवशेन्द्रियेण दर्पेण कन्दर्पविषं मयासीत् ।
तन्मे हतं त्वद्वचनागदेन विषं विनाशीव महागदेन ॥९॥
क्षयं गतं जन्म निरस्तजन्म सद्धर्म्मचर्य्यामुषितोऽस्मि सम्यक् ।

---

१ P. M. समाप्त ।

२ P. M. सुतस्य P. L. M. lacuna T.

कृत्स्नं कृतं मे कृतकार्य्य कार्य्यं लोके प्रभूतोऽस्मि न लोकधर्म्मा ॥१०॥
मैत्रीस्तनीं व्यञ्जनचारुसास्नां सद्धर्म्मदुग्धां प्रतिभानशृङ्गाम् ।
तवास्मि गां साधु निपीय तृप्तस्तृषेव गामुत्तमवत्सवर्णः ॥११॥
यत्पश्यतश्चाधिगमो ममायं तन्मे समासेन मुने निबोध ।
सर्वज्ञ कामं विदितं तवैतत् स्वन्तूपचारं प्रविवक्षुरस्मि ॥१२॥
अन्येऽपि सन्तो विमुमुक्षवो हि श्रुत्वा विमोक्षाय नयं परस्य ।
मुक्तस्य रोगादिव रोगवन्तस्तेनैव मार्गेण सुखं घटन्ते ॥१३॥
द्रव्यादिकान् जन्मनि वेद्मि धातून् नात्मानमुर्व्यादिषु तेषु किञ्चित् ।
यस्मादतस्तेषु न मेऽस्ति सक्ति र्बहिश्च कायेन समा मति र्मे ॥१४॥
स्कन्धांश्च रूपप्रभृतीन् दशार्द्धान् पश्यामि यस्माच्चपलानसारान् ।
अनात्मकांश्चैव वधात्मकांश्च तस्माद्विमुक्तोऽस्म्यशिवेभ्य एभ्यः ॥१५॥
यस्माच्च पश्याम्युदयञ्च सत्तां[१] सर्व्वास्ववस्थास्वहमिन्द्रियाणाम् ।
तस्मादनित्येषु निरात्मकेषु दुःखेषु मे तेष्वपि नास्ति सङ्गः ॥१६॥
यतश्च लोकं समजन्मनिष्ठं पश्यामि निःसारमसच्च सर्वम् ।
अतो धिया मे मनसा विबद्धमस्मीति मे नेञ्जितमस्ति येन ॥१७॥
चतुर्विधे नैकविधप्रसङ्गे यतोऽहमाहारविधावसक्तः[२] ।
अमूर्च्छितश्चाग्रथितश्च तत्र त्रिभ्यो विमुक्तोऽस्मि ततो भवेभ्यः ॥१८॥
अनिःश्रितश्चाप्रतिबद्धचित्तो दृष्टश्रुतादौ व्यवहारधर्म्मे ।
यस्मात् समात्मानुगतश्च तत्र तस्माद्विसंयोगगतोऽस्मि मुक्तः ॥१९॥

---

१ P. L. M. omits सत्तां P. M. सत्वां T.
२ P. M. ०विचारशक्तः ।

इत्येवमुक्त्वा गुरुबाहुमान्यात् सर्वेण कायेन स गां निपन्नः ।
प्रवेरितो लोहितचन्द्रनाक्तो हैमो महास्तम्भ[1] इवावभासे ॥२०॥

ततः प्रमादात् प्रसृतस्य पूर्वं श्रुत्वा धृतिं व्याकरणञ्च तस्य ।
धर्म्मान्वयं चानुगतं प्रसादं मेघस्वरस्तं मुनिराबभाषे ॥२१॥

उत्तिष्ठ धर्मे स्थित शिष्यजुष्टे किं पादयोर्मे पतितोऽसि मूर्द्ध्ना ।
अभ्यर्च्चनं मे न तथा प्रणामो धर्मे यथैषा प्रतिपत्तिरेव ॥२२॥

अद्यासि सुप्रव्रजितो जितात्मन्नैश्वर्य्यमप्यात्मनि येन लब्धम् ।
जितात्मनः प्रव्रजनं हि साधु चलात्मनो न त्वजितेन्द्रियस्य ॥२३॥

अद्यासि शौचेन परेण युक्तो वाक्कायचेतांसि शुचीनि यत्ते ।
अतः पुनश्चाप्रयतामसौम्यां यत् सौम्य नो वेक्ष्यसि गर्भशय्याम् ॥२४॥

अद्यार्य्यवृत्त श्रुतवच्छ्रुतं तच्छ्रुतानुरूपं प्रतिपद्य धर्म्मम् ।
कृतश्रुतो विप्रतिपद्यमानो निन्द्यो हि निर्व्वीर्य्य इवात्तशस्त्रः ॥२५॥

अहो धृतिस्ते विषयात्मकस्य यत्त्वं मतिं मोक्षविधावकार्षीः ।
यास्यामि निष्ठामिति बालिशो हि जन्मक्षयात् त्रासमिहाभ्युपैति॥२६॥

[2]दिष्ट्या दुरापः क्षणसन्निपातो नायं कृतो मोहवशेन मोघः ।
उदेति दुःखेन गतो ह्यधस्तात् कूर्म्मो युगच्छिद्र इवार्णवस्थः ॥२७॥

निर्ज्जित्य मारं युधि दुर्निवारमद्यासि लोके रणशा[स्त्र]शूरः ।
शूरोऽप्यशूरः स हि वेदितव्यो दोषैरमित्रैरिव हन्यते यः ॥२८॥

निर्व्वाप्य रागाग्निमुदीर्णमद्य दिष्ट्या सुखं स्वप्स्यसि वीतदाहः ।
दुःखं हि शेते शयनेऽप्युदारे क्लेशाग्निना चेतसि दह्यमानः ॥२९॥

---

१ P. M. ०शुम्भः ।

२ P. M. has अतोवियामे before verse 27.

अभ्युच्छ्रितो द्रव्यमदेन पूर्व्वमद्यासि तृष्णोपरमात् समृद्धः ।
यावत् सतर्षः पुरुषो हि लोके तावत्समृद्धोऽपि सदा दरिद्रः ॥३०॥
अद्योपदेष्टुं तव युक्तरूपं शुद्धोदनो मे नृपतिः पितेति ।
भ्रष्टस्य धर्मात् पितृभिर्निपातादश्लाघनीयो हि कुलोपदेशः ॥३१॥
दिष्ट्यासि शान्तिं परमामुपेतो निस्तीर्णकान्तार इवाप्तसारः ।
सर्व्वो हि संसारगतो भयार्त्तो यथैव कान्तारगतस्तथैव ॥३२॥
आरण्यकं भैक्षचरं विनीतं द्रक्ष्यामि नन्दं निभृतं कदेति ।
आसीत् पुरस्तात् त्वयि मे दिदृक्षा तथासि दिष्ट्या मम दर्शनीयः॥३३॥
भवत्यरूपोपि हि दर्शनीयस्त्वलंकृतः श्रेष्ठतमैर्गुणैः स्वैः ।
दोषैः परीतो मलिनीकरैस्तु सुदर्शनीयोऽपि विरूप एव ॥३४॥
अद्य प्रकृष्टा तव बुद्धिमत्ता कृत्स्नं यया ते कृतमात्मकार्य्यम् ।
श्रुतोन्नतस्यापि हि नास्ति बुद्धिर्नोत्पद्यते श्रेयसि यस्य बुद्धिः ॥३५॥
उन्मीलितस्यापि जनस्य मध्ये निमीलितस्यापि तथैव चक्षुः ।
प्रज्ञामयं यस्य हि नास्ति चक्षुश्चक्षुर्न तस्यास्ति सचक्षुषोपि ॥३६॥
दुःखप्रतीकारनिमित्तमार्त्तः कृष्यादिभिः खेदमुपैति लोकः ।
अजस्रमागच्छति तच्च भूयो ज्ञानेन यस्याद्य कृतस्त्वयान्तः ॥३७॥
दुःखं न मे स्यात् सुखमेव मे स्यादिति प्रवृत्तः सततं हि लोकः ।
न वेत्ति तच्चैव तथा यथा स्यात् प्राप्तं त्वयाद्यासुलभं यथावत् ॥३८॥

इत्येवमादि स्थिरबुद्धिचित्तस्तथागतेनाभिहितो हिताय ।
स्तवेषु निन्दासु च निर्व्यपेक्षः कृताञ्जलिर्वाक्यमुवाच नन्दः ॥३९॥
अहो विशेषेण विशेषदर्शिंस्त्वयानुकम्पा मयि दर्शितेयम् ।
यत्कामपङ्के भगवन्निमग्नस्त्र[ा]तोऽस्मि संसारभयादकामः ॥४०॥

आज्ञा त्वया श्रेयसि दैशिकेन पित्रा फलस्थेन तथैव मात्रा ।
हतोऽभविष्यं यदि न व्यमोक्ष्यं सार्थात् परिभ्रष्ट इवाकृतार्थः ॥४१॥

शान्तस्य तुष्टस्य सुखो विवेको विज्ञाततत्त्वस्य परीक्षकस्य ।
प्रहीणमानस्य च निर्मदस्य सुखं विरागत्वमसक्तबुद्धेः ॥४२॥

अ[थो] हि तत्त्वं परिगम्य सम्यग्निर्धूय दोषानधिगम्य शान्तिम् ।
स्वं नाश्रमं सम्प्रति चिन्तयामि न तं जनं नाप्सरसो न देवान् ॥४३॥

इदं हि भुक्त्वा शुचि शामिकं सुखं न मे मनः काङ्क्षति कामजं सुखम् ।
महार्हमप्यन्नमदैवताहृतं दिवौकसो भुक्तवतः सुधामिव ॥४४॥

अहोऽन्धविज्ञाननिमीलितं जगत् पटान्तरे पश्यति नोत्तमं सुखम् ।
स्वाधीनमध्यात्मसुखं व्यपास्य हि श्रमं तथा कामसुखार्थमृच्छति ॥४५॥

यथा हि रत्नाकरमेत्य दुर्मतिर्विहाय रत्नान्यसतो मणीन् हरेत् ।
अपास्य सम्बोधिसुखं यथोत्तमं श्रमं व्रजेत् कामसुखोपलब्धये ॥४६॥

अहो हि सत्त्वेष्वतिमैत्रचेतसस्तथागतस्यानुजिघृक्षुता परा ।
अपास्य यद्ध्यानसुखं मुने परं परस्य दुःखोपरमाय खिद्यसे ॥४७॥

मया नु शक्यं प्रतिकर्त्तुमद्य किं गुरौ हितैषिण्यनुकम्पके त्वयि ।
समुद्धृतो येन भवार्णवादहं महार्णवाच्चूर्णितनौरिवोर्म्मिभिः ॥४८॥

ततो मुनिस्तस्य निशम्य हेतुमत् प्रहीणसर्व्वास्रवसूचकं वचः ।
इदं बभाषे वदतामनुत्तमो यदर्हति श्रीघन एवं भाषितुम् ॥४९॥

इदं कृतार्थः परमार्थवित् कृती त्वमेव धीमन्नभिधातुमर्हसि ।
अतीत्य कान्तारमवाप्तसाधनः सुदैशिकस्येव कृतं महावणिक् ॥५०॥

अवैति बुद्धं नरदम्य[1]सारथिं कृती यथार्हन्नुपशान्तमानसम् ।

---

१ P. M. ०दत्त० ।

न दृष्टसत्योपि तथाच बुध्यते पृथग्जनः किं बत बुद्धिमानपि ॥५ १॥
रजस्तमोभ्यां परिमुक्तचेतसस्तवैव चेयं सदृशी कृतज्ञता ।
रजःप्रकर्षेण जगत्यवस्थिते कृतज्ञभावो हि कृतज्ञ दुर्लभः ॥५ २॥
सधर्म्म धर्म्मान्वयतो यतश्च ते मयि प्रसादोऽधिगमेन कौशलम् ।
अतोऽस्ति भूयस्त्वयि मे विवक्षितं नतो हि भक्तोष्वभियोगमर्हसि ॥५ ३।

अवाप्तकार्य्योसि परां गतिं गतो न तेऽस्ति किञ्चित्करणीय-
मण्वपि
अतःपरं सौम्य चरानुकम्पया विमोचयन् कृच्छ्रगतान् परानपि ॥५ ४।
इहार्थमेवारभते नरोऽधमो विमध्यमस्तूभयलौकिकीं क्रियाम् ।
क्रियाममुत्रैव फलाय मध्यमा विशिष्टधर्म्मा पुनरप्रवृत्तये ॥५ ५॥
इहोत्तमेभ्योपि मतः सुभूमो य उत्तमं धर्ममवाप्य नैष्ठिकम् ।
अचिन्तयित्वा सुगतं परिश्रमं शमं परेभ्योऽप्युपदेष्टुमिच्छति ॥५ ६॥
विहाय तस्मादिह कार्य्यमात्मनः कुरु स्थिरात्मन् परकार्य्यमप्यथो ।
भ्रमत्सु सत्त्वेषु तमोवृतात्मसु श्रुतप्रदीपो निशि धार्य्यतामयम् ॥५ ७।
ब्रवीतु तावत्पुरि विस्मितो जनः त्वयि स्थिते कुर्व्वति धर्मदेशनाः ।
अहोबताश्चर्य्यमिदं विमुक्तये करोति रागी यदयं कथामिति ॥५ ८।

ध्रुवं हि संश्रुत्य तव स्थिरं [म]नो
निवृत्तनानाविषयैर्मनोरथैः ।
वधूर्गृहे सापि तवानुकुर्व्वती
करिष्यते स्त्रीषु विरागिणीः कथाः ॥५ ९॥
त्वयि परमधृतौ निविष्टतत्त्वे
भवनगता न हि रंस्यते ध्रुवं सा ।

मनसि शमदमात्मके विविक्ते
मतिरिवकामसुखैः परीक्षकस्य ॥६०॥

इत्यर्हतः परमकारुणिकस्य शास्तुः
मूर्ध्ना वचश्च चरणौ च समं गृहीत्वा ।
स्वस्थः प्रशान्तहृदयो विनिवृत्तकार्य्यः
पार्श्वान्मुनेः प्रतिययौ विमदः करीव ॥६१॥

भिक्षार्थं समये विवेश च पुरीं दृष्टीर्जनस्याक्षिपन्
लाभालाभसुखासुखादिषु समः स्वस्थेन्द्रियो निस्पृहः ।
निर्मोक्षाय चकार तत्र च कथां काले जनायार्थिने
नैवोन्मार्गगतान् [जनान्] परिभवन्नात्मानमुत्कर्षयन्[1] ॥६२॥

सौन्दरनन्दे महाकाव्ये आज्ञाव्याकरणं
नामाष्टादशमः सर्गः ॥

---

१ P. M. उत्कर्षति ।

इत्येषा व्युपशान्तये न रतये मोक्षार्थगर्भाकृतिः
श्रोतॄणां ग्रहणार्थमन्यमनसां काव्योपचारात्कृता ।
यन्मोक्षात्कृतमन्यदत्र हि मया तत्काव्यधर्म्मात् कृतम्
पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथं स्यादिति ॥६३॥

प्रायेणालोक्य लोकं विषयरतिपरं मोक्षात् प्रतिहतं
काव्यव्याजेन तत्त्वं कथितमिह मया मोक्षपरमिति ।
तद्बुद्ध्वा शामिकं यत् तदवहितमितो ग्राह्यं न ललितम्
पांशुभ्यो धातुजेभ्यो नियतमुपकरं चामीकरमिति ॥६४॥

आर्य्यसुवर्णाक्षीपुत्रस्य साकेतकस्य[1] भिक्षो-[2]
राचार्य्य-भदन्ताश्वघोषस्य महाकवेर्महावादिनः कृतिरियम् ॥

---

१ P. M. साङ्केतकस्य । २ P. L. भिक्षोः श्री ।

# APPENDIX

## NOTES ON THE READINGS OF THE TEXT

I. 2. सुश्रियाय is not classical Sanskrit. P.L.M. lacuna.

I. 3. अधोत्तत् is wrong in grammar, so it has been changed into अघुत्तत्. P.L.M. lacuna.

I. 7. P.L.M. lacuna. स्फैकटै: in P.M. The modern Nepalese scribes change very frequently ष्ट into स्त and स्त into ष्ट. So it has been changed into सैकतै:.

P.M. केसरास्तरपाण्डुभिः. The reading of P.L.M. केशरास्तरपाण्डुभिः, which has been adopted.

I. 25. P.M. मनिरुद्धं कुमारस्य. P.L.M. the lower parts of मु, नि and रु are gone. But there is sufficient indication to show that the subscript उ in मु was there. द्धं is almost entire with an anusvāra at the top. But as the anusvāra cannot be construed, it has been changed into visarga.

I. 28. तेषां वृद्धिचिकीर्षया. P.M. has तेषां वृ प्रिय चिकीर्षया. P.L.M. has a long lacuna. But the anusvāra in तेषां is clearly visible. वृ is altogether gone. And after that, the upper part of द्धि, that is दि, is visible. There is room only for two letters after तेषां. So I have made it वृद्धिचिकीर्षया. The word वृद्धि in the sense of prosperity is well known in the Hindu ritualistic works, as in the term वृद्धिश्राद्ध. It is also used in the same sense in this work (I. 39 and 44).

I. 33. निर्म्मिम्मोध्वं. P.L.M. lacuna. P.M. निर्म्मिताध्वं which has been changed into the correct grammatical form of निर्म्मिमीध्वं.

I. 44. P.M. has विदुषस्तम्यु पथ्यत्सु कर्म्मसु. In P.L.M. the upper parts of the letters from वि to क are corroded. There is the subscript त, subscript ष्यु, and the lower curve of प or घ or य, then the lower part of subscript ष, and then the lower part of the subscript सु. From this I have made तस्युपघट्सु कर्म्मसु or तस्युषः घट्सु कर्म्मसु ।

I. 46. P.M. has evidently पत्रं. P.L.M. has the upper portions above the mātrā corroded. The subscript below त is also corroded. The first letter प has a long nose, from which it may be either यत्र or यत्. I prefer the reading of P.M., because P.L.M. is so indistinct.

I. 54. P.M. has आह्लानां वाहुसालिनाम् P.L.M. आलानां वाहुशान्दिनां. Both the readings are obscure. But as the word आलानं is well-known and gives a clear meaning, I have ventured to change the first word into आलानं.

I. Col. P.L.M. invariably calls the work सौन्दरनन्द, but P.M. सौन्दरानन्द. I have preferred the reading of P.L.M. as more ancient.

II. 13. Very corrupt. P.M. has नष्ठवाच्याच्चुरतः सत्यान्मुहूर्त्तमपि जीवितं. P.L.M. has नष्ठ distinct. The lower parts of the next two letters are, to a certain extent, visible. These may be the lower part of क and the lower part of च. The next two letters are absolutely gone. Then faint traces of सत्या. Then the lower part of न्मु. The whole of हूर्त्त. The greater part of the lower section मपि जावत. I suggest नष्ठकाङ्क्षीच्चुरतः सत्यान्मुंहूर्त्तमपि जीवितं as in the text.

II. 18. P.L.M. complete lacuna. P.M. has संत्वमर्थवत् which gives no meaning. I suggest स स्वमर्थवत्. (He gave wealth to good purpose.)

II. 30. P.L.M. मपप्रपत्. P.M. अवतपत् which has been neglected.

II. 31. Both MSS. read कालमस्य मसूसवत्. I cannot make any meaning out of this with grammatical consistency. I suggest कालं स स्वमसूषवत् (that is, he made time produce wealth).

II. 41. P.L.M. तेनाधिरपि. P.M. तेनारपि. I have suggested तेनारिरपि.

II. 53. According to classical Sanskrit वर्ष is masculine as a word formed by the suffix अल्, and so in the body of the book I restored a visarga. But I find that Aśvaghoṣa often uses an अलन्त word in neuter, both in this poem and Buddhacarita. And so in the errata I have corrected the restoration into anusvāra instead of visarga [corrected in the *text* in this edition]. In P.L.M. I find a slight trace of anusvāra too.

III. 3. P.M. has तथेन्द्रकं which is evidently wrong as this teacher is known in Buddhist traditions as रुद्रकः रामपुत्रः or उद्रक. P.L.M. has तथोर्द्रकः. But the scribe of this MS. is in the habit of adding a superscript र whenever there is a subscript र.

III. 4. P.M. has हन्तमागमम् । निश्चयमनवगतः in which हन्त is absolutely unmeaning, as there is no necessity for खेद here. I have accepted the reading of P.L.M.

III. 18. P.M. has अपरिग्रहस्य. But the sixth case-ending cannot be construed. The P.L.M. has only the left-hand half of स, and there is a faint trace of the tip of the nose of the subscript स. So I have ventured to make it अपरिग्रहः सः.

III. 20. P.M. वर्ण॰ P.L.M. has only the lower subscripts visible, the first subscript is ऊ and the second subscript ण. I take it to be तूर्ण.

III. 22. P.M. निश्चलमतिरसयिषु पुनर्न्नं बहुधाभवत् पुनरभूत्त-

